सरस्वतीभवन-ग्रन्थमाला

[१२३]

कमलाकरभट्टविरचितं

# मीमांसाकुतूहलम्

( प्रकरणग्रन्थः )

सम्पादकः
पण्डितश्रीपट्टाभिरामशास्त्री
'पद्मभूषणम्'




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 123 ]

# MĪMĀṂSĀKUTŪHALAM

OF

KAMALĀKARA BHAṬṬA

*EDITED WITH NOTES*

PT. PAṬṬĀBHIRĀMA ŚĀSTRĪ
'Padmabhūṣaṇa'




VARANASI

1987

Research Publication Supervisor—
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



Published by—
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221002.



Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi—221002.



First Edition : 1100 Copies

Price—Rs. 45.00



Printed at—
**Mahakant Press**
B. 18/14, Rewari Talab
Varanasi—221010

सरस्वतीभवन-ग्रन्थमाला

[१२३]

कमलाकरभट्टविरचितं

# मीमांसाकुतूहलम्

( प्रकरणग्रन्थः )

सम्पादकः

पण्डितश्रीपट्टाभिरामशास्त्री

'पद्मभूषणम्'




वाराणस्याम्

२०४४ तमे वैक्रमाब्दे    १९०९ तमे शकाब्दे    १९८७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
**निदेशकः, अनुसन्धानसंस्थानस्य,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

☐

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२ ।

☐

प्राप्तिस्थानम्—
**विक्रय-विभागः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२ ।

☐

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि

मूल्यम्—४५.०० रूप्यकाणि

☐

मुद्रकः—
**महाकान्त प्रेस,**
बी० १८/१४, रेवड़ी तालाब
वाराणसी—२२१०१० ।

श्रीः

# उपोद्घातः

अथेदानीं कमलाकरभट्टविरचितं 'मीमांसाकुतूहला' भिधं मीमांसाशास्त्र प्रकरणग्रन्थरत्नं विद्वदपश्चिमानां शयकुशेशयेषु समर्पयन् परमां मुदमवाप्नोमि। अस्य ग्रन्थरत्नस्य मातृका सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवने सुरक्षिताऽऽसीत्। बहुभ्यो हायनेभ्यः पूर्वं सरस्वतीभवने मातृकान्वेषणावसरे कस्मिंश्चन वेष्टने ग्रन्थरत्नमिदमद्राक्षम्। परवर्तिभिर्ग्रन्थकृद्भिः कैरपि नोल्लिखितमिदं कुतूहलम्। अहमपि कुतूहलान्वितः किञ्चद्दूरमपठम् प्रकाशनार्होऽयं ग्रन्थ इति निरचिनवम्। सरस्वतीभवनादन्यत्र मातृकानयनं नियमविरुद्धम्, तत्रैवोपविश्य प्रतिलिपिसम्पादने आत्मानमसमर्थं मन्यमानः तदानीन्तनकुलपतिमहोदयानां डॉ० श्री गौरीनाथशास्त्रिणामनुमत्या यन्त्रद्वारा प्रतिकृतिग्रहणेन ग्रन्थमवापम्। गृहे एवोपविश्य लिखितुमारब्धवान्। मातृकालेखकः संस्कृतज्ञान विधुर इति तदीयान्तिमवाक्येनैव ज्ञातुं शक्यते–'संवत् १७०३ समए फाल गुण सुद्ध त्रयोदसी सोमवासरे लिषितं कासीवास्यां:' इति। केनापि विदुषा ग्रन्थोऽयं संशोधित इति मातृकावलोकनेन प्रतिभाति। मातृकालेखकेन क्वचिदक्षराणि परित्यक्तानि, क्वचिद् विस्मृतानि पदानि लिखितुम्, क्वचिद्वाक्यमेव परित्यक्तम्। सर्वमिदं संशोधितं केनचन विदुषा। संशोधनाय मातृकान्तरस्यावलम्ब आसीदिति प्रतीयते। अस्या मातृकायाः प्रतिलिपिसम्पादनायानेके मासा व्यतीताः। तदनन्तरं दुरूहस्थलेषु टिप्पणीसंयोजने महान् कालो गतः। कथमपि मुद्रणालयप्रेषणयोग्यं ग्रन्थमिमं सम्पाद्य विश्वविद्यालयाधिकारिभ्यः प्रादाम्। केनापि प्रबलेन प्रतिबन्धकेन विश्वविद्यालयसाधारण्येनान्धकार एव निपतितोऽयं प्रकाशनार्हो ग्रन्थः। एकदा तारामुद्रणालयं गतं मां-मुद्रणालयाधिपोऽवोचत्-भवद्धस्तलिखिता पाण्डुलिपिर्मत्सकाशे वर्तत इति। तत्प्रदर्शनाय कथितोऽधिपः प्रादर्शयत्पाण्डुलिपिम्। सैवेयं पाण्डुलिपिर्या विश्वविद्यालयाधिकारिभ्यः प्रागदाम्। अस्याः प्रकाशनायाधिकारिभ्योऽनुमतिमवाप्य तुभ्यं दास्यामीति तामादाय गृहानागच्छम्। पुनरप्येकवारं सम्यगधीत्य विशेषेण टिप्पण्यादिकं संयोज्य कुलपतये श्री वेङ्कटाचलमहाभागाय दर्शयित्वाऽनुमतिमवाप्य महाकान्त मुद्रणालयाधिपाय प्रादाम्। इयं कुतूहलमातृकायाः कथा।

ग्रन्थोऽयमत्युत्तमो मीमांसायाम्। अधिकरणप्रस्थानमवलम्ब्य भाष्य-वार्तिक-तद्व्याख्यानोपव्याख्यानादिभिरनेके विपश्चितो भगवतीं मीमांसां प्रवर्द्धि-

तवन्तः, किन्तु मीमांसाशास्त्रैकसम्मते प्रमाण-प्रमेयप्रस्थाने विपश्चितां विशेषेण प्रवृत्तिर्न विलोक्यते। यद्यपि वेदवाक्यार्थनिर्णयाय प्रवृत्तस्यास्य दर्शनस्याधिकरण प्रस्थानमेव मुख्यम्, प्रमाणप्रमेयनिरूपणाय न्याय-वैशेषिकदर्शने प्रवृत्ते एव, तथापि-एकैकस्य दर्शनस्य किञ्चिदसाधारण्यं भवत्येवेति तन्निरूपणमप्यावश्यकमेव। अतः द्वादशस्वध्यायेषु प्रथमाध्यायस्य प्रथमपादं तर्कपादाभिधमवलम्ब्य शबरस्वामिभिर्भाष्यकृद्भिः वार्तिककारैर्भट्टपादैश्च विवेचितान्विषयानाश्रित्य परवर्तिनो ग्रन्थकृतः मीमांसाभिमतेषु प्रमाणेषु प्रमेयेषु च लेखनीं व्यापारितवन्तः। तत्रापि प्रमेयाः पदार्था इयन्तः, तेषां प्रमाणानीयन्ति इति क्रमबद्धं निरूपणं न विलोक्यते यथा न्यायवैशेषिकदर्शनयोर्विलोकयामः। तत्र भाट्टप्रस्थाने 'मानमेयोदय' इति, प्रभाकर प्रस्थाने 'तन्त्ररहस्यम्' इति ग्रन्थद्वयमुपलभामहे।

तामिमां न्यूनतां परिहर्तुकामः कमलाकरभट्ट इमं ग्रन्थं प्रणिनाय। यथा न्यायशास्त्रे 'सिद्धान्तमुक्तावली' विद्यते तथा मीमांसायामयं ग्रन्थ इति वक्तुं शक्यते। ग्रन्थारम्भे ग्रन्थनिबन्धने स्वीयो यः क्लेशः तं निबध्नाति—

त्वयि श्रमं निवेद्याहं रघुवीर! कृती यतः।
मदीयस्य श्रमस्यास्य प्रायो बोद्धैव दुर्लभः॥ इति

सत्यवचा अयं कमलाकरभट्टः। भट्टपादाविष्कृतं पन्थानमनुसृत्य गन्तुं कृतसङ्कल्पः यत्र यत्र ते पदार्थस्वरूपं यथा यथा प्रदर्शयन्ति तत्तथा तथावगत्य तान् पदार्थान् स्वग्रन्थे निबध्नाति। भट्टपादानां ग्रन्थस्तु विपिनोपमः। कुत्र कः पदार्थो निलीन इत्यन्वेषणं महाक्लेशसाध्यम्। ते हि यथावसरं पदार्थान् क्वचित् खण्डयन्ति क्वचिच्च निरूपयन्ति। तत्रापि ते कञ्चन क्रमं नावलम्बन्ते। वेदबाह्यमतपरिशीलनावसरे यः तदभ्युपगतः पदार्थः स्वीयसिद्धान्तविरोधमाचरति स कामं स्वयूथ्यैर्वैदिकमार्गगामिभिरङ्गीकृतोऽपि विशेषः समवायश्च भट्टपादैर्नाङ्गीकृतौ। कमलाकरस्तदनुसारेण स्वीये कुतूहले पञ्चभावपदार्थान् द्रव्य-गुण-कर्म-सामान्यैः सह शक्तिं संयोज्य परिगणयति। साप्तमिक-नावमिकन्यायेन सर्वेषामङ्गानामपूर्वप्रयुक्तत्वं साधयन्तो मिमांसकाः शक्तिपदार्थेन विना किमपि कर्मानुष्ठातुमनुष्ठापयितुं वा न प्रभवन्ति। तदिदं कमलाकरभट्टस्स्वीये कुतूहले विस्तरेण विरूपयति। 'यच्छब्द आह तदस्माकं प्रमाणम्' 'नास्ति वचनस्यातिभारः' इति वदन्तश्शबरस्वामिनो भाष्यकृतः शिक्षयन्ति यद् वेदवचनानुसारेणास्माभिर्गन्तव्यमिति। अतएव न्यायवार्तिककारा लिखन्ति—

'मीमांसाभिमतस्तर्कस्सर्वो वेदसमुद्भवः' इति।

अस्य सर्वस्यापि मूलम् औत्पत्तिकसूत्रम्। तस्मिन् सूत्रे 'तस्य ज्ञानमुपदेशः' इत्युपदेशपदं प्रयुक्तवान् जैमिनिः। तं शब्दं 'आद्यमुच्चारणम्' इति भाष्यकृद्विवृणोति। एवञ्च शक्तेरस्तित्वे वेद एव प्रमाणमिति निरूपणं न दुस्साध्यम्। 'व्रीहीन् प्रोक्षति' 'आज्यमुत्पुनाति' 'यूपं छिनत्ति' इत्यादयो विधिशब्दाः प्रोक्षणादीन् विदधानाः तत्तद्द्रव्योद्देशेन प्रवृत्ता अपि न तावन्मात्रेण कृतकृत्या

भवन्ति। न ह्यत्र जलसंयोगादिरेव प्रोक्षणादीनां तात्पर्यविषयीभूतः, विनापि प्रोक्षणादिना तस्य तस्य द्रव्यस्य स्वरूपसिद्धेः। मन्त्रवत्प्रोक्षणादिना काञ्चन शक्तिमवाप्य प्रधाननिष्ठफलसाधकत्वशक्तावुपकुर्वन्ति व्रीह्यादिद्रव्याणि। अङ्गोपकृतस्यैव प्रधानस्य फलसम्पादकत्वं वाक्यैर्बोध्यते। यथा लोके गुरुः शिष्येषु सत्सु तद्द्वारा जलाहरण-वस्त्रक्षालनासनास्तरणादीनि कार्याणि कारयति। असत्सु शिष्येषु स्वयमेव सर्वं सम्पादयति, तथैव यत्र प्रकरणेऽङ्गैस्सह प्रधानं विहितम्, तत्र तदुपकृतमेव प्रधानं फलसम्पादनाय प्रवर्तते। असत्स्वङ्गेषु यत्र सन्ति तत आनीय तैरुपकृतं कार्यं साधयति। यदा चान्यतोऽङ्गानामानयने समर्थं न भवति तदा दर्विहोमन्यायेन सर्वसाधारणैरङ्गैरेवोपकृतं सत् फलाय समर्थं भवतीति प्रकाराः प्रदर्शिताः। तत्र दृष्टोपकारकाणामप्यङ्गानां नियमजन्नादृष्ट-फलकत्वमङ्गीकृत्यैव वार्तिककृतस्तेषामुपकारकत्वं साधयन्ति। एवञ्च यान्यङ्गानि विहितानि तान्यपूर्वप्रयुक्तान्येव। तदपूर्वमेव शक्तिपदाभिधेयम्।

एवं पञ्च भावपदार्थान् परिगणय्य तत्र द्रव्येषु शब्दं तमश्च संयोज्यैका-दशद्रव्याणि भाट्टमतेन प्रदर्शयति। शब्दस्य द्रव्यत्वं सूत्रारूढम्। द्रव्यलक्षणाक्रान्त त्वात्तमसो द्रव्यत्वं साधयति। वाय्वाकाशकालदिक्तमसां प्रत्यक्षत्वमङ्गीकरोति। एवमष्टादशसङ्ख्यया गुणान् विभज्य विभागपृथक्त्वपरत्वापरत्वादीनां तत्र तत्रान्तर्भावं प्रदर्श्य 'बुद्धिर्ज्ञानम्' इत्यभिधाय भाट्टसम्मतानि षट् प्रामाणानि विचारयति। तत्र प्रत्यक्षे संयोगः तादात्म्यम् संयुक्ततादात्म्यम् विशेष्यविशेषण-भावश्चेति सन्निकर्षाः। अनुमाने परामर्शो नास्ति, व्यतिरेकव्याप्तिर्नास्ति, प्रतिज्ञा-हेतूदाहरणानि अथवा उदारहरणोपनयनिगमनानीति त्रय एवावयवा इति निरूपयति। कर्म प्रत्यक्षम्, सामान्यं त्रिविधम् इति च प्रतिपाद्य शब्दखण्डे शाब्दबोधौपयिकान् पदार्थान् विवेचयति। विवेचनावसरे क्वचित् परुषान् शब्दान् श्रावयति—'एवं वदन् शिखां गृहीत्वा प्रष्टव्यः' इति 'स्वगुरुं पृच्छेः' 'वेदान्तानभिज्ञः' इति च। एवं प्रयोक्तुः कमलाकरभट्टस्याशयः प्रतिभाति यद् भट्टपादानामुक्तिषु दृष्टतरस्तस्याऽभिनिवेश इति। भट्टपादा हि समन्वय-वादिनः—स्वमतविरुद्धं वेदबाह्यानां मतमक्षरशः खण्डयन्तोऽपि शून्यक्षणिक-विज्ञाननैरात्म्यादिवादा वैराग्यातिशयाधायका इत्युपनिषदर्थवाप्रभवा इत्यपि वदन्ति—'विज्ञानमात्र-क्षणभङ्ग-नैरात्म्यादि वादानामप्युपनिषदर्थवादप्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्' (तं० वा० पृ० १६८ पू० सं०)

एवं —

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया'॥ इति वार्तिकम्,

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां-
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम्'

इति भगवत्पादानामुपदेशम्,

'कर्माण्यपि जैमिनिः फलार्थत्वात्' 'फलञ्च पुरुषार्थत्वात्' 'पुरुषश्च कर्मार्थत्वात्' इति जैमिनिसूत्राणि च सुविभाव्य कमलाकरभट्टो मोक्षस्य ज्ञान कर्मसमुच्चयमार्गः श्रेयानिति निश्चित्य तत्र पक्षद्वयसाधकान्युपनिषदादिवाक्यानि परिगणय्य ज्ञानकर्मसमुच्चयवादे स्वस्याभिनिवेशं प्रकटयति। भट्टपादानामप्यत्रैव तात्पर्यमिति प्रमाणानि च दर्शयति। युक्तमिदम्—शास्त्रस्य मूलप्रवर्तकस्य महर्षिर्जैमिनेः कर्मणां फलार्थत्वम् फलानां पुरुषार्थत्वम् पुरुषाणाञ्च कर्मार्थत्वमिति सूत्रयतो नायमभिप्रायस्स्यात्-यन्मानवास्संसारचक्रे परिभ्रममाणा एव तिष्ठन्त्विति, तथासति स्वीयदर्शनस्य दर्शनत्वं कथं सिध्येत् ? परमात्मनो दर्शनावसानानि खलु दर्शनानि भवन्ति। तदर्थमेवं पन्था उद्घाटनीयः—ये च पुनः पुनर्जनित्वा आहाराय जीवनं मन्यमाना नैकविधानि फलान्युपभोक्तुमीहन्ते ते काम्यानि निषिद्धानि च कार्माण्याचरण्तः फलोपभोगं कुर्वन्तु, ये च जीवनायाहारं मन्यमानाः फलोपभोगविमुखास्ते नित्यनैमित्तिकान्येवाचरन्तु। काम्या विधयः पुरुषान् बलान्न प्रवर्तयन्ति किन्तु यो यत्कामयते तस्योपायं प्रदर्शयन्ति। यः पशुन् पुत्रान् जनपदं राज्यं वा प्राप्तुमिच्छेत् तस्यायमभ्युपाय इत्येवं बोधनं काम्यविधीनां 'सर्वेभ्यः कामेभ्यौ दर्शपूर्णमासौ' 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्यादीनां कार्यम्। कर्तव्यत्वप्रकारकबोधजननसामर्थ्यवन्त्यपीमानि वाक्यानि तत्तत्फलाभिलाषिभ्य उपायमात्रमवबोधयन्ति, न त्ववश्यकर्तयतां बोधयन्ति। 'यावज्जीवमग्निहोत्रं जुहुयात्' 'वसन्ते वसन्ते ज्योतिषा यजेत'इत्यादिवाक्यानि तु नित्यानामकरणे प्रत्यवायो भवेदिति तत्परिहारायावश्यकर्तव्यतां बोधयन्ति। एवं स्मार्तश्रौतकर्मणां स्वरूपे ज्ञाते शरीरारम्भकं कर्म किमिति ज्ञातं भवति। काम्यं निषिद्धञ्च कर्म शरीरारम्भकम्। तस्य तस्य फलस्योपभोगाय शरीरन्तावदावश्यकम्। उपभोगार्हाणि फलान्यैहिकान्यपि भवन्त्यामुष्मिकाण्यपि। तत्तदनुसारेण कृतानि कर्माणि शरीराणि समुत्पादयन्ति। जन्मजन्मान्तरार्जितपुण्यपापविषय एव विवादः—किं तेषां ज्ञानेनैव नाश्यत्वम् उत नित्यनैमित्तिककर्मनाश्यत्वपीति। यथा 'ज्ञानाग्निः सर्वकर्माणि' इत्यादिप्रमाणैर्ज्ञाननाश्यत्वं, तथा 'प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि' इत्यादिप्रमाणैः प्रायश्चित्तरूपेण क्रियमाणैः कर्मभिस्तन्नाशाभ्युपगमे न शास्त्रविरोधः। इदमभिप्रेत्यैव भट्पादैरुक्तम्—

'नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया' इति।

वर्णाश्रमधर्मपरिपालनं ज्ञानमार्गावलम्बिनां कर्ममार्गावलम्बिनाञ्च तुल्यमेव। ये चाधिगतस्वस्वरूपास्सिद्धाः ते शरीरमिदं नष्टमिति वा न नष्टमिति वा न विदन्ति, यतस्ते स्वस्वरूपमध्यगमन्। तेषां कृते प्रत्यवायसंस्पर्श एव दूरापेतः। ये च संसारिणो वर्णाश्रमधर्मपरिपालनरतास्तेषामुद्धारायापि मार्गः परिकल्पनीय इति 'पुरुषश्च कर्मार्थत्वात्' इति जैमिनिसूत्रमवलम्ब्य भट्टपादाः कर्ममार्गं

प्रदर्शितवन्तः। भट्टपादाननुसरन् कमलाकरभट्टो ज्ञानकर्मसमुच्चयवादं विस्तरेण प्रतिपादितवान् स्वीये कुतूहले।

कर्ममार्गे दृढतराभिनिवेशयुक्तोऽपि कमलाकरभट्टः सगुणोपासनायां श्रद्धातिशयं प्रकटयति। नित्यनैमित्तिककर्माचरणशीला अपि विपश्चितः माध्याह्निकानुष्ठानानन्तरं शिवपूजनं पञ्चायतनपूजनं श्रीचक्रसम्पूजनं वा स्वस्वसम्प्रदायानुसारेण विदध्युरिति स्वीयमाशयमाविष्करोति 'तेनेशस्य विधीयतामपचितिः' इति भगवत्पादानामुपदेशवाक्ये तच्छब्दः कर्म परामृशति। नित्यनैमित्तिक कर्मानुष्ठानमेव भगवतोऽपचितिर्भवति, तत्र देव पूजनमपि नित्यं कर्म गृहस्थानां विहितमेव। इदञ्च पूजनं सगुणोपासनरूपमित्यङ्गीकारे न कोऽपि दोषः। अत एव ग्रन्थादावन्ते च लिखति—'एवं विदितपदार्थः नित्यानित्यवस्तुविवेकशमदमादि वैराग्यभक्तिसम्पन्नो नित्यकर्माचरन् 'यो वै भूमा तत्सुखम्' इत्यादिश्रुतिस्मृतिभ्यो मोक्षस्य पुरुषार्थत्वमाकलय्य योगाभ्यासेन दहरादि सगुणब्रह्मोपासनयाध्यक्षीकृतब्रह्मतत्त्वः परब्रह्मणि लीयते' इति।

मम तु प्रतिभाति-यद् बादरिः जैनिनिश्च 'अहं ज्ञानमार्गमवलम्ब्य गच्छामि, त्वं कर्ममार्गमवलम्ब्य गच्छेः' इति मिथस्संल्लप्य सूत्रप्रणयने प्रवृत्ताविति। सूत्रप्रणयनात्पूर्वमपि ज्ञानकर्मविषयिणो चर्चा महर्षीणां गोष्ठीष्वासीदेव। अत एवोभावपि स्वस्वग्रन्थे स्वनाम्ना सहान्येषामपि नामानि निर्दिशतः। अस्तु यथा तथा वा! उभयोरप्ययं 'समय' आसीदिति प्रतीयते-यत् एकस्य मार्गेऽपरेण हस्तक्षेपो न कर्तव्य इति। संहिता ब्राह्मणवाक्यानि समादाय गच्छति जैमिनिः, उपनिषद्वाक्यानि समादाय गच्छति बादरिः। उभयेषामपि वाक्यानां वेदत्वं समानम्। अत्र विरोधस्य क्वावसरः? वेदवाक्यार्थर्णिय उभाभ्यामपि कर्तव्यः, प्रामाण्यञ्चोभयोस्तुल्यम्।

एवं कमलाकरभट्टो ज्ञानकर्मसमुच्चयो मोक्षसाधनमिति प्रतिपादयन् दुःखा भाव एव मोक्ष इति पक्षञ्च निराकुर्वन् मोक्षस्य सुखरूपत्वं साधयति। एवमत्राभ्यूहितुं शक्यते—यदतिचिरन्तने काले मीमांसाध्येतारस्त एवासन् ये च स्वकुलपरम्परागतशाखां सनियममधीत्य वेदवाक्यार्थाधिगमाय गुरुकुल एव त्रिचतुराणि वर्षाणि न्युष्य द्वादशलक्षणीं मीमांसामधिगत्य गुरोरनुज्ञामवाप्य द्वितीयमाश्रमं प्रविविशुः। द्वितीयमाश्रमं यथावत्परिपालयन्तः कृतश्रौताधानाः स्मार्तानि श्रौतानि च कर्माण्याचरन्तोऽध्यापयन्तश्च शास्त्राणि, ते ग्रन्थप्रणेतारोऽप्यभवन्। तेषु श्रीमदप्पयदीक्षितेन्द्राः श्रीवेङ्कटेशभखिनः, श्रीराजचूडामणिदीक्षिताः, श्रीवासुदेवदीक्षिता अन्ये च महानुभावाः परिगणयितुं शक्यन्ते। इमे याज्ञिकमीमांसका इति व्यवहर्तुम् योग्याः अन्ये च भवदेव-पार्थसारथि-भट्सोमेश्वर-भट्टसोमनाथ-वैद्यनाथप्रभृतयो ग्रन्थकृतो दार्शनिकमीमांसका इति व्यवहारयोग्याः। इमे कर्मानुष्ठातारो नाभवन्निति न मेऽभिप्रायः, एतेषां ग्रन्थेषु तौतातितमततिलक-शास्त्रदीपिकादिष्वधीयमानेषु श्रौतप्रक्रियाविचारः श्रीमदप्पय्यदीक्षित श्रीवेङ्कटेश-

मख्यादिभिर्यादृशः कृतस्तादृशो नानुभयते। किञ्च ते महाक्रतूनामनुष्ठातार इत्यत्र प्रमाणमुपलभ्यते । भवदेत्रादिविषये तादृशं प्रमाणं नोपलभ्यते । अस्तु यथा तथा वा । याज्ञिकमीमांसका दार्शनिकमीमांसका इति द्वेधा विभागो मीमांसकसमाजे प्रचरन्ति । अत एव ग्रन्थेषु तत्र तत्र 'याज्ञिकास्तु' इति मतभेदमुल्लिखन्ति ग्रन्थ कृतः खण्डदेवप्रभृतयः ।

एवं विभागप्रदर्शनस्येदं मम तात्पर्यम्—ये कर्मकाण्डिनो मीमांसकाश्च ते कर्मानुष्ठानावसरे कर्मणामारम्भे 'तेन परमेश्वरं प्रीणयानि' इति कर्मणामवसाने च 'नारायणायेति समर्पयामि' इति चोल्लिखन्ति । ये च केवलमीमांसका दार्शनिकास्तेषामेवसुल्लेखस्यावश्यकता न विद्यते, यतो हीमे शरीराम्भकत्वेन पुण्यं कर्म पापञ्च कर्मेत्यङ्गीकुर्वन्ति । तत्र कर्मजन्यमपूर्वमेव फलोपभोगाय शरीरारम्भकं भवति । तत्र परमेश्वरप्रीणनं वा नारावणाय समर्पणं वा कस्मै फलाय स्यात् ।

एतेनेश्वरप्रद्वेषिणो दार्शनिकमीमांसका इत्यारोपयितुं प्रवृत्ताः केचन । आरोपमिमं दूरीकुर्वन् कमलाकर ईश्वरं प्रसाधयति कुतूहले । ज्ञानकर्मसमुच्चयपक्षं प्रसाध्य **'ननु निरीश्वरवादिनस्ते कोऽयं भक्तिमार्गप्रवेशः'** ? इति पृष्ट्वा **'एतत्त्वयं प्रवादाशनिरेकदेशिषु'** (कु. पृ. ४४) इत्यभिधाय वार्तिकमारभ्य सर्वेषां ग्रन्थकृतां मङ्गलपद्यानि प्रदर्शयन् ईश्वरस्यानुमानसाध्यत्वञ्च निराकुर्वन् शब्दगम्यत्वं संसाधयति । याज्ञिकमीमासका भवन्तु दार्शनिकमीमांसका वा, उभयेऽपि सेश्वरमीमांसका एव । तत्र याज्ञिकमोमांसकाः सगुणं साकारमीश्वरम्, दार्शनिकमोमांसका निर्गुणं निराकारञ्च तं स्वोकुर्वन्तोति समन्वयो भवितुमर्हति । शरीरारम्भकसामग्रोविघटनं भगवद्भक्ति द्वारा भवत्विति प्रथमे, द्वितीये च काम्यनिषिद्धकर्माकरणपूर्वकं नित्यनैमित्तिकाचरणद्वारा भवत्विति निश्चित्य प्रवृत्ता इति समन्वयस्सुकरः । एतेन वेदानां पूर्वभागस्य, तेषामन्तिमभागस्य च प्रामाण्ये निस्सन्दिग्धत्वं सधितं भवति

एवं ज्ञानकर्मसमुच्चयपक्षमीश्वरवादं मोक्षवादञ्च परिसमाप्य कमलाकरो मीमांसाभिमतशाब्दबोधसामग्रीः प्रदर्श्य स्वाभिमत पञ्चपदार्थानां स्वरूपं सुनिरूप्यान्ते स्वीयं विनयं प्रदर्शयति—

**'विज्ञेषु विज्ञापनमेतदेव मूर्खोत्थनिन्दापि विभूषणं मे ।**
**ग्रन्थान् समालोडय णिभाव्य दूरं स्तुवन्तु निन्दन्तु हृदाऽथवा माम्'** ।। इति ।

## कमलाकरभट्टकृतयः कालश्च

भट्टकमलाकरेणानेके ग्रन्थाः प्रणीताः । तत्र निर्णयसिन्धुः तत्त्वकमलाकरश्चेति द्वौ धर्मग्रन्थौ प्रसिद्धावेव । मीमांसायां 'मीमांसाशास्त्रमाला' द्वादशलक्षण्यास्सर्वेषामधिकरणानां सिद्धान्तमात्रावद्योतिका पद्यमयो । कमलाकरात्मजेनानन्तभट्टेनास्या विवरणं लिखितम् । वेदमीमांसानुसन्धानकेन्द्रद्वारा

प्रकाशिनोऽयं ग्रन्थः। २. 'मीमांसाकुतूहलम्' ३. तन्त्रवार्तिकव्याख्यानम्'। व्याख्यानस्य नाम न ज्ञायते, मातृकापि नोपलभ्यते। ४. 'भावनाविनोदः' अत्युत्तमोऽयं ग्रन्थः प्रतिभाति। मातृका नोपलभ्यते। वेदान्ते साहित्ये चास्य ग्रन्था वर्तन्ते। काव्यप्रकाशटीका पण्डितपत्रे मुद्रितेति लोकाः कथयन्ति। मीमांसाकुतूहले तत्र तत्र ग्रन्थमिमं स्मारयति कमलाकरः, वार्तिकटीकामपि स्मारयति। निर्णयसिन्धोर्भूमिकायामेतद्विरचितानां ग्रन्थानां सूची प्रदत्ता वर्तते। व्याकरणे साहित्ये धर्मशास्त्रे दर्शनेषु च प्रगाढं वैदुष्यमाहवत्ययमिति ग्रन्थाध्ययनेन प्रतीयते। विद्वत्परम्परायामयमाविर्भूतः। अस्य पिता **श्रीरामकृष्णभट्टः**; पितामहः **श्री नारायणभट्टः**, प्रपितामहः **श्रीरामेश्वरभट्टः**। स्वपितरं जगद्गुरुं व्यपदिशति। अवतारद्वयपुरुष इत्यपि निर्दिशति। सर्वेऽपीमे धर्म-मीमांसावेत्तारः, कमलाकर-भट्टतनुजोऽनन्तभट्टो मीमांसायां धर्मशास्त्रे च निरतिशयं वैदुष्यभाबिभर्तीति तदीय शास्त्रमालाविवरणेन विज्ञायते। मत्पूज्यवादैरेकदा कथितम्—यत्काश्यां पञ्चादशपुरुषपर्यन्तं भट्टकुलं प्रथितमासीत् यैश्च धर्म-मीमांसाशास्त्रयोरध्ययनाध्यायनेन संरक्षणं विहितमिति। एवमेव देवकुलमप्यत्र प्रथितमासीत्–खण्डदेव भवदेवः आपदेवः अनन्तदेव एवमादयो विद्वन्मण्डल्यां प्रसिद्धा आसन्।

कमलाकरः स्वीये निनयसिन्धौ ग्रन्थसमाप्तिसमयं निर्दिशति—'वसु ऋतु-ऋतु-भूमिते नरपतिविक्रमतोऽथ याते रौद्रे' इति। इदानीं पञ्चचत्वारिंशदधिकद्विसहस्रतमो वृषनामा संवत्सरः प्रारब्धः। तत्र कमलाकरनिर्दिष्टेषु वर्षेषु न्यूनीकृतेषु सम्प्रति सप्तसप्तत्यधिकचतुश्शतवर्षेभ्यः पूर्वं ग्रन्थकृतः काल इति निर्णीतं भवति। अर्थादीसवीय षोडशशताब्द्याभयमासीत्। इदानीमेवास्य ग्रन्थस्य प्रकाशनभाग्योदयो जातः। सत्यमुक्तं केनापि--

'करोतु नाम नीतिज्ञो व्यवसायमितस्ततः।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम्'॥

मुद्रणालयप्रेषणयोग्यपत्त्राणां लेखने तत्र तत्र टिप्पणीलेखने साहाय्यं कृतवन्तं हिन्दूविश्वविद्यालये मीमांसाप्रधानाध्यपकपदं भूषयन्तं पण्डितप्रवरं श्रीनिवासताताचार्यं शतशो धन्यवादैः प्रपूरयामि। 'प्रूफ' पदाभिधेयस्य संशोधने नितरामुपकृतवतीं मत्सहधर्मिणीमाभीष्टवरप्रदानेनानुगृह्णातु परमेश्वर इति तं प्रार्थये मद्दृदोषेण च सन्ति भूयांसि स्खलनानि, तानि संशोध्य करुणवरुणालया विद्वदपश्चिमा मामनुगृह्णन्त्विति तान् सम्प्रार्थ्य विरमामि।

वाराणसी

विद्वज्जनपदपांसुः
**पट्टाभिरामशास्त्री**

ओ३म्

# विषय-सूची

श्रीकमलाकरभट्टप्रणीतं

# मीमांसाशास्त्रकुतूहलम्

आनन्दैकनिकेतं रामं सीतालतायुक्तम् ।
वन्दे गणपतिमाद्यं वाचामीशां सरस्वतीञ्च गुरुम् ॥ १ ॥

भट्टरामेश्वरं नत्वा भट्टनारायणं तथा ।
श्रीरामकृष्णचरणौ नमामि स्फूर्तिहेतवे ॥ २ ॥

सर्वकल्याणसन्दोह-निदानं यत्पदद्वयम् ।
द्युनदीसोदरीमम्बामुमाख्यां नौमि सादरम् ॥ ३ ॥

आसादितानि प्रथमेन पुंसा दश स्वरूपाणि युगप्रभेदात् ।
एकाश्रयं[1] रूपयुगं प्रपित्सुः श्रीरामकृष्णो भुवि विश्रुतोऽभूत् ॥ ४ ॥

तत्पादसंसेवनजातप्रभावादासाद्य हृष्यन्धिषणाविलासम् ।
तदात्मजः श्रीकमलाकराख्यः कुतूहलाद्भाट्टमतेऽभिधत्ते ॥ ५ ॥

मीमांसातन्त्रगहनच्छन्नानर्थान् यथामति ।
चोरानिव निबध्नामि सुखं सन्तश्चरन्त्वतः ॥ ६ ॥

बोद्धारो मत्सरग्रस्ता नाद्रियेरन् श्रमं यदि ।
मदीयं तदपि श्रीमान् वीक्षतां रघुनन्दनः ॥ ७ ॥

त्वयि श्रमं निवेद्याहं रघुवीर ! कृती यतः ।
मदीयस्य श्रमस्यास्य प्रायो बोद्धैव दुर्लभः ॥ ८ ॥

## ( पदार्थनिर्देशः )

द्रव्य-गुण-कर्म-शक्ति-सामान्यानां पदार्थानां कर्मसमुच्चितं तत्त्वज्ञानं निःश्रेयसहेतुः ।

### विशेषसमवाययोः पदार्थान्तरत्वाशङ्का

ननु विशेषसमवायावपि पदार्थौ स्तः । तथाहि नित्यद्रव्येषु समानजाति गुणकर्मसु च योगिनां व्यावृत्तिबुद्धिर्जायते । सा चान्येन न युज्यत इति विशेष पदार्थोऽवश्याभ्युपेयः । न च विशेषे विशेषान्तरापत्तिः, तस्यान्वर्थनाम्नो व्यावृत्ति-रूपत्वेनान्यानपेक्षत्वात् । न च नित्यद्रव्येष्वपि विशेषवत्स्वत[2] एव व्यावृत्ति-

---

१. रूप्यतेऽनेनेति रूपं नाम तद्युगं रामकृष्णेत्यभिधानम् ।

२. स्वतो व्यावृत्तत्वादेवेत्यर्थः ।

स्स्यादिति वाच्यम्, अत्यन्तसदृशत्वात्। तानि ह्येकजातिगुणक्रियत्वेनानुवृत्त-प्रत्ययभाञ्जि। विशेषाणान्तु जात्याद्यभावाद् युक्तमन्यानपेक्षत्वम्। न च नित्यगुणेष्वपि वि (शे) षापत्तिः,[१] तद्विशेषाश्रयाश्रितत्वेन भेदधीसम्भवात्।

तथाऽयुतसिद्धानामाधाराधेयभूतानाम् इहप्रत्ययकार्यानुमेयस्सम्बन्धः समवायः। यथा इह तन्तुषु पटसमवाय इति। न चायं संयोगः,[२] अयुतसिद्धत्वात्। तत्त्वन्त्वाधाराधेययोर्विभागायोग्यस्वरूपत्वम् न च तादात्म्यमेव सः[३], प्रत्यक्षाप्रत्यक्षेष्वसम्भवात्। प्रत्यक्षस्य हि शब्दस्याकाशात्मकत्वे तस्याप्रत्यक्षत्वेन शब्दस्यापि तत्त्वापत्तिः। तस्मात्पदार्थान्तरमेवेदम्। तत्कथं पञ्चानामुद्देशः।

## समाधानम्

अत्रोच्यते-कुत्र विशेषापेक्षा ? स्वरूपव्यावृत्तौ ? व्यावृत्तिज्ञाने वा ? नाद्यः, स्वरूपभेदस्य नित्यत्वेन विशेषाजन्यत्वात्। किञ्च विशेषः शब्दादिरेव ? तद्भिन्नो वा ? नाद्यः, महाप्रलये शब्दादेः कार्यत्वेन नाशाद्व्यावर्तकधर्माभावेन व्योमादीनां व्यावृत्त्ययोगप्रसङ्गात्। न द्वितीयः,[४] धर्मिग्राहकमानेन शब्दाश्रयत्वादिना तत्सिद्धौ किं तेन[५] ? शब्दाश्रयत्वञ्च शब्दात्यन्ताभावानधिकरणत्वमिति न प्रलयेऽव्याप्तिः। व्यावृत्तिर्ह्यातमाकाशादीनां [६]धर्मिग्राहकमानेनैव सिद्धा। [७]नान्त्यः, गुणकर्मसमवायादिषु तदापत्तेः। न च शुक्लत्वादिभिर्व्यावृत्तिः[८], सदृशशुक्लेषु गत्यभावात्। न च तद्विशेषाश्रयाश्रितत्वेन भेदधीः, वैपरी-

---

१. यथा परभाणूनां मिथो विशेषाद् भेदः, तथा परमाणुगतैकत्वादिगुणानां भेदसाधनाय विशेषान्तरं स्वीकार्यमिति शङ्का। तत्समाधानमाह-तद्विशेषेत्यादि। स चासौ विशेषः तस्य विशेष इति वा तद्विशेषः तस्याश्रयो द्रव्यं तदाश्रितत्वं नित्यगुणानाम्। तथाचैतत्परमाणुगतैकत्वं तत्परमाणुगतैकत्वाद्भिन्नम्, तद्विशेषाश्रयाश्रितत्वादित्यनेन पथा भेदज्ञानसम्भवाद्विशेषान्तरस्वीकारो नावश्यक इति।

२. ययोर्द्वयोरेकमविनश्यदवस्थं सदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ।

३. समवायस्तादात्म्यमिति स्वीकारे शब्द आकाशे तादात्म्येन तिष्ठतीति वक्तव्यम्। तेन शब्दाकाशयोस्तादात्म्यमिति सिध्येत्। तत्राकाशस्य यथाप्रत्यक्षत्वं तथा शब्दस्याप्यप्रत्यक्षत्वं स्यात्। अतस्समवायोऽतिरिक्त इत्यर्थः।

४. धर्मिण आकाशस्य ग्राहकभानेन-अनुमानप्रमाणेनेत्यर्थः।

५. शब्दभिन्नेन विशेषेणेत्यर्थः।

६. आकाशः शब्दाश्रयः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् विशेषगुणत्वात् बहिरिन्द्रिययोग्यत्वाच्चेत्यनुमानेन धर्मिणः आकाशस्य शब्दाश्रयत्वेन सिद्धिरिति भावः।

७. व्यावृत्तिज्ञाने वेति पक्षः।

८. विजातीयरूपाणां शुक्लत्वनीलत्वादिना परस्परव्यावृत्तिसम्भवेऽपि सजातीयानामेवानेकेषां शुक्लरूपाणां शुक्लत्वादिना व्यावृत्तिर्न सम्भवतीत्याशयः।

त्यस्य सुवचत्वात्। यद्यप्याश्रये द्रव्ये लाघवादेको विशेषोऽर्हः गुणेष्वनेक इति गौरवमयुक्तम्, तथापि विशेषो भिन्नत्वेन ज्ञात एव भेदको वाच्यः, अन्यथा तद्विशेषायोगात्। तज्ज्ञानञ्चाश्रयभेदज्ञानायत्तम्। ततश्च परस्पराश्रयः। किञ्च विशेषेषु कथं व्यावृत्तिः? स्वत एवेति चेत् परमाणुष्वपि तथास्तु। योगिनः प्रत्यक्षमोक्षन्त एवेति चेत् तर्हि तानेव[1] पृच्छ। विशेषं विना स्वरूपे (नैव ?) णैव[2] तत्सम्भवाच्च।

ननु सर्वत्र भेदज्ञाने विशेषनिष्ठोऽसाधारणधर्मो हेतुः, [3]तेनात्रान्यासम्भवाद् विशेषसिद्धिः। मैवम्, विपक्षे बाधकाभावात्, विशेषेषु व्यभिचारात् स्वत एव विशेषवत्तदुपपत्तेश्च। तदुक्तं **वार्त्तिके**—

'न चान्त्येन विशेषेण व्यवहारोऽस्ति कस्यचित्' इति। [4]**उक्तञ्चैतच्छिरोमणिनापि**। तस्मान्नार्थो विशेषेण।

## समवायनिराकरणम्

नापि समवायेन,[5] तत्र मानाभावात्। स हि नित्यो जन्यो वा? **नाद्यः**[6], प्रसिद्धसम्बन्धवैलक्षण्ये सम्बन्धत्वायोगात्। सम्बन्धो हि सम्बन्धिपरतन्त्रः, तदधीननिरूपणश्च। यथा संयोगः। घटरूपसमवायश्च शब्दसमवायादभिन्नो भिन्नो वा? उभयथापि च सम्बन्धिनाशेऽपि नित्यत्वात्तिष्ठन् तौ विना प्रतीय-

---

१. वार्तिककारैस्तादृशयोगिनां निराकृतत्वादिति तात्पर्यम्।

२. व्यावृत्तिसम्भवादित्यर्थः।

३. अत्रेति नित्यद्रव्येष्वित्यर्थः। असाधारणधर्मो यत्र वर्तते तत्र तन्मुखेन इतरव्यावृत्तिः। परमाणुष्वसाधारणधर्मस्य कस्यचिददृष्टत्वात् तेषां परमाणूनां परस्परव्यावृत्त्यर्थं कश्चनासाधारणधर्मोऽभ्युपेयः, स एव विशेष इत्यभिधीयते। तेन च पृथिवीपरमाणु र्जलपरमाणोर्भिन्नः (एतत्परमाणुस्तत्परमाणोर्भिन्नः) एतद्गतविशेषात् इतीतरव्यावर्तकतया नित्यद्रव्यवृत्तितया विशेषस्सिद्ध्यति। पार्थिवपरमाणुविशेषस्य जलीयपरमाणुविशेषव्यावर्तकत्वेन स्वापेक्षयाऽन्यस्य असाधारणधर्मस्यानभ्युपगमात् तत्रासाधारणधर्माभाववत्सु विशेषेषु परस्परव्यावृत्त्यङ्गीकारेण व्यभिचारः। अपि च किञ्चिद्दूरं गत्वाऽपि क्वचित् स्वतोव्यावर्तकत्वेन विश्रान्तिर्वाच्या। तन्न विशेष इति अदृश्यं कञ्चन पदार्थं कल्पयित्वा तस्य स्वतोव्यावर्तकत्वकल्पनामपेक्ष्य क्लृप्तपरमाणूनामेव स्वतो व्यावर्तकत्वमङ्गीकृत्य तत्रैव विश्रान्तिरुचितेत्याशयः।

४. (पदार्थतत्त्वनिरूपणम् पृ० २० क्र. सं.) अत्रायं शिरोमणिग्रन्थः—'विशेषोऽपि न पदार्थान्तरम् मानाभावात्। विनापि व्यावर्तकं धर्मं परेषां विशेषाणामिव नित्यानां द्रव्याणां स्वत एव व्यावर्तकत्वात्, इति।

५. प्रयोजनमिति शेषः।

६. प्रसिद्धसम्बन्धस्संयोगः, तद्वैलक्षण्य इत्यर्थः।

मानश्च कथं सम्बन्धस्स्यात् ? भवन्वा वायुनिष्ठसमवायस्य रूपसमवायाभेदे कथं न तत्र रूपधियमापादयेत् ?

ननु विशिष्टज्ञानमात्रे न विशेषणसम्बन्धग्रहो हेतुः शुक्तौ रजतभ्रमायोगात्। तत्र सम्बन्धग्रहाभावात्। तेन तत्र भेदाग्रहः क्वचिच्चासंसर्गाग्रह इत्यसंसर्गाग्रह एव भ्रमप्रमानुगतो विशिष्टप्रत्यक्षे हेतुः। वायौ तु तदभावान्न रूपविशिष्ट धीरिति चेत्–न, तत्र तेनैव सम्बन्धेन कदाचिदुत्पन्ना रूपधीः प्रमा स्यात्, रूपसमवायस्य ग्रहात्, घटे तेनैव सम्बन्धेन रूपवैशिष्टचप्रमावत्। वायौ रूपनिरूपितः समवायो नास्तीति चेत् न, घटवृत्तिसंयोगे भूतलवृत्तिनियामकत्वतन्निरूपितत्वाभावेऽपि घटे भूतलसंयोग इति विशिष्टप्रमादर्शनात् तन्निष्ठसमवायस्य रूपसमवायाभेदे तन्निरूपितत्वस्यापि सत्वात् स्वरूपभिन्नस्य निरूपितत्वस्याभावात्। किं बहुना ? शुक्तौ रजतभ्रमोऽपि न स्यात्, रजतत्वसमवायस्य तत्र सत्त्वात्। न चाधाराधेयभावसम्बन्ध एव विशिष्टधी विषयः, न तु समवायादिः। अतस्तदुपपत्तिरिति वाच्यम्, तेनैवोपपत्तौ समवायस्याकिञ्चित्करत्वात्। इदं रजतमित्यत्र तदभावात्। रक्ते श्यामसम्बन्धे जन्ययोर्नित्य (सम्बन्धवत्वे) मानाभावाच्च। न च शुक्लो घट इति प्रत्यक्षमेव मानम्, तस्याभेदगोचरत्वात्, इदानीं नीलसम्बन्धो नास्तीत्यनित्यत्वानुभवाच्च। न च शुक्लो घट इति[1] धीर्विशेषणसम्बन्धविषया विशिष्टप्रत्यक्षत्वात् दण्डीतिवदनुमानं मानम्। स्वरूपभिन्नसम्बन्धे साध्येऽभावविशिष्टप्रत्यक्षे व्यभिचारात्[2] तद्वत्स्वरूपसम्बन्धेन तदुपपत्तेश्च। न च स्वरूपाणां नानात्वान्न विशिष्टधीविषयत्वम्, लाघवात्तु समवाय एवैकस्तथेति वाच्यम्, अभावे तस्य क्लृप्तत्वात्। अन्यथा तत्रापि समवायापत्तेः। प्रसिद्धसम्बन्धविलक्षणस्यापि सम्बन्धत्वे व्योमादेरेव सम्बन्धत्वं कल्प्यताम् धर्मिकल्पनात इति न्यायात्। नापि लक्षणमस्ति। नित्यः सम्बन्धस्समवाय इति तु नित्यसंयोगे व्यभिचारि। न च कालाकाशयोर्न संयोग इति वाच्यम्, बाधकाभावात्। अन्यतरकर्माद्यभावान्नेति चेत्त्–न, तस्य जन्यसंयोगविषयत्वात्।

## नित्यसंयोगसाधनम्

किञ्च यथा संयोगस्याव्याप्यवृत्तित्वं न[3] सर्वसंयोगे, घटाकाशसंयोगे

---

१. शुक्लो कट इति विशिष्टबुद्धिः विशेषणसम्बन्धविषया इत्यनुमितौ विशेषणसम्बन्धः किं स्वरूपसम्बन्धः अथवा स्वरूपभिन्नो वेति विकल्प्य आद्ये सिद्धसाधनम्, द्वितीये व्यभिचारः स्वरूपभिन्नसम्बन्धाभाववति अभावविशिष्टप्रत्यक्षे विशिष्टप्रत्यक्षत्वरूपहेतोस्सत्वात्।

२. तद्वदिति—अभावविशिष्टप्रत्यक्षवदित्यर्थः।

३. स्वाभावसामानाधिकरण्यमव्याप्यवृत्तित्वम्। वृक्षे मूलावच्छिन्ने कपिसंयोगसत्त्वेऽपि अग्रावच्छेदेन तदभावस्यापि सत्त्वात् स्वाभावसामानाधिरण्यमस्तीत्यव्याप्यवृत्तित्वं संयोगस्य। एतादृशसंयोगः घटाकाशसंयोगे नित्यपरमाण्वोस्संयोगे च नास्तीति संयोगसामान्यं नाव्याप्यवृत्तीत्यर्थः।

परमाण्वोस्संयोगे च तदभावात् किन्तु दृश्यसंयोग एव। स्वाभावसामानाधिकरण्यरूपस्याव्याप्यवृत्तित्वस्य 'मूले कपिसंयोगो नाग्रे' इति प्रतीत्या तत्रैव सत्वात्। तथा जन्यत्वमपि दृश्यसंयोग एव। न च घटाकाशसंयोगेऽव्याप्यवृत्तितास्त्येव, संयोगाधिकरणाकाशे संयोगाभावस्यापि सत्वादिति वाच्यम्, घटमादाय व्याप्यवृत्तित्वस्यापि सत्वात्। कथं द्वयं विरुद्धमेकत्रेति चेत्-न, घटनिरूपितसंयोगस्याकाशेऽव्याप्यवृत्तित्वेऽप्याकाशनिरूपितस्संयोगो घटे व्याप्यवृत्तिरेवेति सम्बन्धिभेदेन परिहारात्। न च देशभेदाद्धटेऽपि संयोगभेदः, अवयवसंयोगे घटसंयोगत्वाभावात् लाघवेन संयोगैक्याच्च।

किञ्च-आकाशः कालनिष्ठसंयोगाश्रयः संयोगित्वात्, द्रव्यत्वाद्वेत्यनुमानेन कारणा[1]भावादनित्यसंयोगबाधे नित्यसंयोगसिद्धिः।[2] क्षित्यादिसकर्तृत्वानुमानादिव कर्तृसिद्धौ नित्यज्ञानादिमतस्सिद्धिः। न च घटादिसंयोगस्यानित्यत्वसिद्धौ लाघवात्संयोगत्वेनैव तत्सिद्धेर्बाधान्नेद[3] मनुमानमिति वाच्यम्, [4]अतिलाघवेन गुणत्वस्यैवानित्यत्वावच्छेदकतया नित्यगुणोच्छेदापत्तेः। एवं ज्ञानत्वावच्छेदेनानित्यत्वापत्तेरीश्वरोऽपि न सिध्येत्।

[5]नन्वप्रयोजकत्वम्, मूर्तत्वमुपाधिर्वा। द्रव्यत्वं हि न संयोगित्वे तन्त्रम्,

---

१. कर्मजन्यत्वरूपकारणाभावादित्यर्थः।

२. क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटादिवत् इत्यनुमानेन क्षित्यादिकर्तृतया सिद्ध्यन् ईश्वरः नित्यज्ञानादिमत्वेन सिद्ध्यति। तथाहि-कर्तृत्वञ्चोपादानापरोक्षज्ञानचिकीर्षाकृतिमत्वम्, अस्मदादीनां शरीरिणामनित्यज्ञानवतां क्षित्याद्युपादानापरोक्ष्यासम्भवात् न तत्कर्तृत्वं सम्भवतीति अस्मद्विलक्षणोऽशरीरी क्षित्याद्युपादानज्ञानवत्वेनेश्वरः साध्यते। तत्र ईश्वरज्ञानस्यानित्यत्वे शरीरादिरूपकारणाभावात् नित्यत्वञ्चेति नित्यज्ञानादिमत्त्वेन कर्तृसिद्धिर्यथा तद्वत् आकाशः कालनिष्ठसंयोगाश्रय इत्यत्राप्यन्यतरकर्मादिरूपानित्यसंयोगकारणाभावात् नित्यसंयोगाश्रयत्वेनाकाशस्सिद्ध्यति।

३. नित्यसंयोगत्वापेक्षया संयोगत्वस्य लघुत्वात् तदवच्छिन्नस्य साध्यत्वं वक्तुंयुक्तम्। तथा सति संयोगत्वावच्छेदेन घटादिसंयोगस्यानित्यत्वदर्शनात् प्रकृतेऽपि संयोगाश्रयतया सिद्ध्यन्नाकाशोऽपि अनित्यसंयोगाश्रयत्वेनैव सिध्येन्न नित्यसंयोगाश्रयत्वेनेत्युक्तानुमाने (नित्यसंयोगाश्रयसाध्यकस्थले) बाध इति शङ्कितुराशयः।

४. समाधानमाह—अतिलाघवेनेति। यदि नित्यसंयोगत्वापेक्षया संयोगत्वस्य लघुत्वात् संयोगत्वावच्छेदेन घटादिसंयोगादौ अनित्यत्वं तर्हि संयोगत्वं गुणत्वव्याप्यजातिः, तदपेक्षया गुणत्वस्यैव लघुत्वेन तदवच्छेदेन घटादिसंयोगादौ अनित्यत्वमङ्गीक्रियतां न संयोगत्वावच्छेदेन। तथा च गुणत्वावच्छेदेनानित्यत्वसिद्धौ नित्यगुणोच्छेदापत्तिः। अस्मदादिज्ञानेषु अनित्यत्वं दृष्टमिति ज्ञानत्वावच्छेदेनानित्यत्वमभ्युपगम्यतां, तथा सति नित्यज्ञानादिमान् कश्चनेश्वरोऽपि न सिद्ध्येत् इति भावः।

५. यथा पर्वतोवन्हिमान् धूमादित्यत्र धूमोऽस्तु बन्हिर्मास्तु इत्यप्रयोजकत्वशङ्कोद्भावने कृते यदि बन्हिर्न स्यात् तर्हि धूमोऽपि वह्निजन्यो न स्यादिति तर्केण धूमाग्न्योर्दृष्टकार्य-

उत्पन्नविनष्टे [1]द्रव्ये व्यभिचारात् । न चैकत्र सतोः [2]कालाकाशयोः कथं न संयोग इति वाच्यम्, रूपरसादौ व्यभिचारात् । द्रव्यत्वाभावान्न तत्र संयोगश्चेन्मूर्त्तत्वाभावान्न विभुनोरपीति तुल्यम् ।

अत्र ब्रूमः--न तावदुपाधिः, काले साध्याव्यापकत्वात् । न च कालभिन्नत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकं मूर्त्तत्वमुपाधिः, अन्योन्याश्रयात् । सिद्धे हि विभुनोस्संयोगाभावे मूर्त्तत्वमुपाधिः, तस्माच्च विभुसंयोगाभाव इति ।

[3]किञ्चोपाधेस्सत्प्रतिपक्षोत्थापकत्वे खे मूर्त्तत्वाभावेन कालसंयोगाभावे साध्ये काले व्यभिचारात् । कालभिन्नत्वे सति कालनिष्ठसंयोगाश्रयत्वाभावे

---

कारणभावभङ्गप्रसङ्गरूपेणोक्तानुमानेऽप्रयोजकत्वशङ्कानिरासः तद्वत् प्रकृते आकाशः कालनिष्ठसंयोगाश्रयः द्रव्यत्वादित्यनुमाने आकाशे द्रव्यत्वमस्तु संयोगाश्रयत्वं मास्तु इत्यप्रयोजकत्वशङ्कायां निरासकः कोऽपि अनुकूलतर्को नास्ति इत्यप्रयोजकत्वम् ।

१. उत्पन्नं यद्घटादिद्रव्यं द्वितीयक्षणे नष्टं तद्घटे प्रथमक्षणावच्छेदेन वर्तते द्रव्यत्वं किन्तु तदा तत्र संयोगो नास्ति उत्पन्नं द्रव्यं क्षणमगुणमक्रियञ्च तिष्ठतीति न्यायात् । अतः संयोगाभाववति तादृशघटे द्रव्यत्वस्य सत्त्वाद्व्यभिचारः ।

२. कालस्य आकाशस्य च विभुत्वात् सर्वत्र विद्यमानत्वात् घटादिमूर्तद्रव्ये एकत्र उभावपि वर्तेते । अतश्च तयोस्संयोगोऽवश्यमभ्युपेय इति शङ्कितुरभिप्रायः ।

न हि एकत्र वर्तमानत्वं संयोगित्वे कारणम्, यतो हि रूपरसयोरेकस्मिन् आम्रफलादौ विद्यमानत्वेऽपि न परस्परन्तयोस्संयोगः तद्वत् कालाकाशयोरेकघटादिवृत्तित्वेऽपि न तयोस्संयोगः ।

अथ यत्र द्रव्यत्वं तत्रैव संयोगः, रूपरसयोर्द्रव्यत्वाभावान्न संयोगः कालाकाशे द्रव्ये अतस्तयोस्संयोगित्वमवश्यमभ्युपगन्तव्यमिति चेन्न, मूर्तत्वमेव संयोगित्वे तन्त्रम्, अत एव घटपटयोस्संयोगः, कालाकाशयोरमूर्तत्वान्न विभुनोः परस्परं संयोग इति भावः ।

अमुं भावं मनसि निधायैव मूर्तत्वमुपाधिरित्यभिहितम् । संयोगाश्रयत्वं घटपटादौ वर्तते तत्र मूर्तत्वं च विद्यत इति साध्यव्यापकत्वम्, प्रकृते आकाशे मूर्तत्वाभावात् पक्षान्तर्भावेण साधनाव्यापकत्वं चेति प्रकृतानुमाने मूर्तत्वस्योपाधित्वं बोध्यम् ।

विशिष्टस्य कालनिष्ठसंयोगाश्रयत्वस्य (गुरुभूतस्य) साध्यत्वाङ्गीकारेऽपि कालस्यापि विभुत्वात् तत्संयोगो घटादावक्षत इति तदन्तर्भावेण साध्यव्यापकत्वं मूर्तत्वस्याव्याहतमेवेत्याशयः ।

३. उपाधेर्व्यभिचारोन्नायकत्वं च उपाधेस्साध्यव्यापकतया तयोर्व्यतिरेकव्याप्तिज्ञाने सति उपाध्यभावे साध्याभावस्य प्रमितत्वेन साध्याभाववद्वृत्तित्वस्यैव व्यभिचाररूपत्वात्तदुन्नायकत्वमक्षतमिति ।

उपाध्यभावस्य साध्याभावव्याप्ततया साध्याभावसाधकहेतुसत्वे साध्याभावव्याप्यहेतुमान् पक्ष इति ज्ञानं यथा भवति तथा उपाध्यभावे साध्याभावस्य व्याप्यसत्वे व्यापकसत्वमिति रीत्या आवश्यकत्वात् उपाधेर्व्यतिरेकिविधया साध्याभावव्याप्यहेतुमत्पक्षरूपसत्प्रतिपक्षोन्नायकत्वं सञ्जाघटीतीत्याशयः ।

साध्ये विभूनां पक्षसमत्वेन दृष्टान्ताभावात्। व्यतिरके तु महाप्रलये कालनिष्ठ संयोगाश्रयत्वाभावेऽपि कालभिन्नत्वरूपविशेषणाभावेन विशिष्टाभावात् काले व्यभिचारः। सर्वमुक्तौ परमाणोर्मूर्त्तत्वेऽपि कालसंयोगाभावेन तस्याप्रयोजकत्वाच्च न हेतोः परप्रयुक्तस्याप्युपजीवित्वम्, येनोपाधिस्स्यात्। एतेनाप्रयोजकत्वं प्रत्यूढम्। न हि क्षणमगुणं द्रव्यमिति राजाज्ञा, रूपादेर्नित्यत्वात्संयोगित्वहेतौ तदभावाच्चेति केचित्। आचार्याणान्त्वपूर्वाधिकरणे 'सर्वसंयोगानां वियोगाविनाभूतत्वा' दित्युक्तेर्नित्यसंयोगाभावोऽभिप्रेतो लक्ष्यते।

अस्तु तर्ह्यनित्यो नानैव समवाय इति प्रभाकरमतम्। अत एवेदानीं घटे नीलसम्बन्धो नास्तीत्यनित्यत्वानुभवः। न च नीलाभाव एव प्रतीतेर्विषयो न सम्बन्धाभाव इति वाच्यम्, संयोगेऽपि तदापत्त्या नित्यत्वापत्तेः तन्नाशज्ञानस्यापि विभागविषयत्वापत्तेः। अन्यत्र नीलस्य सत्त्वादिह नास्तीति चेत्—पूर्वं नीले पश्चात्पीते घटे नीले, तत्सम्बन्धे तन्निरूपितत्वे च सति तदभावायोगात्। न च समवायान्तरापत्तिः, यथा कार्यमात्रस्य ध्वंसप्रतियोगित्वं ध्वंसेऽसम्भवाद् भावविषये सङ्कोच्यते तथा [1]समवायेऽसम्भवात्तद्भिन्ने भावकार्ये सङ्कोच्यताम्। तेन ध्वंसवन्निमित्तमात्राधीनत्वात् (नोक्तदूषणावकाशः ?)

ननु लाघवादेक एव समवायोऽस्तु। न च वायौ रूपस्य जले गन्धस्य च प्रतीत्यापत्तिः। अत्र हि किमापाद्यते ? वायौ रूपसम्बन्धो रूपादिकं वा ? नाद्यः, तत्र प्रतीतौ चेष्टापत्तेः। नान्त्यः, वायौ रूपसमवायसत्त्वेऽपि रूपाभावात्। तदीयसम्बन्धवत्वे तद्वत्त्वं नियतमिति चेन्न; आकाशसंयोगस्याकाशे सत्त्वेऽपि घटे भूतलसंयोगे सत्यपि तद्वत्त्वाभावेन व्यभिचारात्। वृत्तिनियामके सम्बन्धे नियमान्नैवमिति चेत् न तावद्यत्किञ्चिद्वृत्तितानियामके सम्बन्धे नियमः, हस्तवृत्तितानियामकबदरसंयोगस्य बदरवृत्ति त्वेऽपि बदरे बदराभावात्। कालसंयोगे घटादिर्वृत्तितानियामके व्यभिचारात्, अप्रयोजकत्वाच्च। यत्र यद्वृत्तितानियामकसम्बन्धः, तत्र तद्वत्ता नियतेति चेत्—न; वायौ हेतोरसिद्धेः। वायौ सन्नपि रूपसमवायः कथं न तद्वृत्तितानियामक इति चेत्—न; समवायेन वायौ रूपं नास्तीत्यनुभवबलेन तथैव स्वीकारादिति चेत्, उच्यते–वायौ रूपसमवायो नास्तीति प्रतीत्या समवायस्य नानात्वात् नियामकत्वस्य स्वरूपात्मकत्वेन तत्र

---

१. अनित्यो नानैव समवाय इति प्राभाकरपक्षे समवायस्यानित्यत्वेन कार्यत्वात्, कार्यस्य समवायिकारणजन्यत्वदर्शनात्, अस्यापि समवायस्य समवायिकारणजन्यत्वावश्यम्भावात् समवायान्तरापत्तिरित्याशङ्कायामाह–समवाये असंभवादिति।
अत्रायं भावः। यथा ध्वंसप्रतियोगित्वरूपकार्यत्वस्य ध्वंसेऽसंभवात् भावत्वे सति ध्वंसप्रतियोगित्वम् इति कार्यत्वस्य भावविषयत्वेन सङ्कोचः क्रियते तद्वत् प्रकृतेऽपि समवायभिन्नकार्ये समवायिकारणजन्यत्वमिति सङ्कोचीकृत्य समवायान्तरापत्तिरूपानवस्थादोषस्य परिहारस्सम्भवति। समवायस्य केवलनिमित्ताधीनत्वं प्राथमिकध्वंसस्येव अङ्गीक्रियत इति।

सत्त्वाच्च। अन्यथा आकाशे शब्दसमवाय एवास्ति न शब्द इत्यपि स्यात्। न च लाघवादनुगतबुध्या समवायस्यैकत्वे तस्या विशिष्टाभावो विषय इति वाच्यम्, संयोगेऽपि तथापत्तेः। तस्मान्नाना समवायाः। समवेत इत्यनुगतधीस्तु समवायत्वेनाखण्डोपाधिनैवेति। तदेतच्छिरोमणिनापि स्पष्टमुक्तम्—'समवायोऽपि च नैकः' इत्यादिना।

अत्र ब्रूमः—'नानासमवाया अपि किं नित्याः अनित्या वा? नाद्यः; 'जन्ययोर्नित्यसम्बन्धस्य रक्ते श्यामसम्बन्धस्याभावाच्च' इत्यादिदूषणोक्तेः। नान्त्यः; जन्यसम्बन्धस्य यावत्सम्बन्धिजन्यत्वात्तदुत्पत्तिकाले सम्बन्धाभावेन युतसिध्यापत्त्या समवायत्वभङ्गापत्तेः। भावकार्यस्य समवायिकारणजन्यत्वेन समवायस्यापि समवेतत्वेन समवायान्तरापत्त्यानवस्थापत्तेः। लाघवेन समवायवन्नीलस्यैकत्वेन नीलसमवायानां भेदाभावाच्च। अथ निमित्तमात्रात्तस्योत्पत्तिरिति चेत्—न; कार्यमात्रे तदापत्तेः।

किञ्च समवायः केन सम्बन्धेन तन्तुषु वर्तते? सम्बन्धिभ्यामसम्बद्ध एव सम्बन्धिनौ सम्बन्धयेच्चेत्-हिमवद्विन्ध्यावपि सम्बन्धयेत्। तेन संयोगवत्सम्बद्ध एव सम्बन्धयतीति वाच्यम्। ततश्चानवस्था। सम्बन्धस्य सम्बन्धान्तरानपेक्षत्वात्स्वरूपेणेति चेत्, संयोगेन किमपराद्धम्, येन तत्र समवायः स्वीक्रियते। गुणत्वात्तत्र समवाय इति चेत्, स्वरूपेण तादात्म्येन वा तदुपपत्तेः। गुणत्वं वा त्यज्यताम्, का हानिः, तदुक्तं शङ्कराचार्यैः—'गुणपरिभाषायाश्चातन्त्रत्वात्' इति। सविस्तरञ्च समवायो निराकृतो वार्त्तिके तर्कपादे–

'न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना' प्र० सू० १४६ इत्यादिना, तट्टीकायां न्यायरत्नाकरे च।

## समवायस्य स्वरूपसम्बन्धानतिरिक्तत्वाशङ्का

ननु स्वरूपसम्बन्धस्य प्रत्येकपर्यवसन्नत्वादनेकेषां विशिष्टधीविषयत्वे गौरवमिति लाघवात्समवायस्य विषयत्वं कल्प्यते। मैवम्; स्वरूपाणां क्लृप्तत्वात् समवायस्य च कल्प्यत्वात्।[1] अन्यथा विशेषणादिस्वरूपस्य विशिष्टधीगोचरत्वे गौरवाद्विशिष्टमपि पदार्थान्तरं स्यात्। नन्वेवं विशिष्टानां भेदे [2]स एव दोषः। अभेदे च घटवति तदभावधीः प्रमा स्यात्, विशिष्टस्यैकत्वादिति चेत्—न;

१. यद्यपि स्वरूपाणां सम्बन्धत्वे तेषामनन्तत्वात् अनेकेषां सम्बन्धत्वस्वीकारापेक्षया विशिष्टज्ञाने समवायस्यातिरिक्तस्यैकस्य सम्बन्धत्वकल्पने लाघवम्, तथाऽपि स्वरूपस्य क्लृप्तत्वात् समवायस्य कल्प्यत्वात् क्लृप्तकल्प्ययोर्मध्ये (क्लृप्तस्यैव प्रबलत्वात्) कल्प्यनिष्ठकल्पनाप्रयुक्तगौरवापेक्षया क्लृप्तपदार्थानन्त्यप्रयुक्तगौरवं लघु। अतः क्लृप्तनां स्वरूपाणां सम्बन्धत्वमुचितम्। एवमनङ्गीकारे दूषणमाह—अन्यथेति। क्लृप्तानां स्वरूपाणां सम्बन्धत्वानऽङ्गीकारे इत्यर्थः।

२. स एव दोषः—विशिष्टानां भेदे तेषामनन्तत्वात् आनन्त्यप्रयुक्तगौरवरूपपूर्वोक्त दोष इत्याशयः।

तदा स्वरूपवद्वैशिष्ट्यसम्बन्धाभावात्। अथ विशेषणादिस्वरूपैरेवोपपत्तेर्न विशिष्टमतिरिक्तम्, तदा समवायेऽपि तथास्तु।

### अभावस्याधिकरणात्मकत्वाशङ्का, तन्निरासश्च

नन्वेवमधिकरणभिन्नोऽभावो न स्यात्, क्लृप्तनानाधिकरणैरेव तद्धीसम्भवात्। किञ्च द्रव्यत्वगुणत्वकर्मत्वाद्यभावकूटादेव सत्ताभावव्यवहारात्सोऽपि न स्यात्। न स्याच्च द्रव्यत्वगुणत्वाद्यभावोऽपि, पृथिवीत्वाद्यभावकूटादेव तदुपपत्तेः। पृथिवीत्वाद्यभावोऽपि न स्यात्, घटाद्यभावैरेव सिद्धेः। अतो यथा तत्र लाघवादतिरिक्तोऽभावस्सिध्यति, तथा स्वरूपातिरिक्तस्समवायोऽपीति (चेत्)–

अत्र ब्रूमः—नाधिकरणात्मकोऽभावः। तदा हि 'इह घटो न' इति प्रतीतेः को विषयः? न भूतलम्, घटवत्यपि तदापत्तेः। घटसंयोगाभावश्चेत् सिद्धोऽभावः पदार्थः। नापि घटज्ञानाभावः तद्युक्तं वा भूतलम्, [1]उक्तोत्तरत्वात्। किञ्च अभावस्याधिकरणात्मकत्वे भूतले घटाभाव इति धीर्न स्यात्। न हि भूतले भूतलमस्ति। एतेनाधिकरणनिष्ठं पदार्थानामभावधीहेतुत्वं प्रत्यूढम्। यदपि-विशेषाभावकूटान्न सामान्याभावः पृथगिति तन्न; तत्र विशेषाभावप्रतिसन्धानेऽपि सामान्याभावप्रतीतेर्व्यवहारादेव हि तत्सिद्धिः। इह तु लाघवेन समवायस्यैकत्वे संयोगेऽपि तदापत्तिर्दुर्वारा। भेदे[2] वोक्तदूषणादिति दिक्। उक्तञ्चैतन्नृसिंहाश्रमैर्विस्तरेण।

ननु संयोगस्यैकत्वे घटपटसंयोगः प्रत्यक्षो न स्यात्, सम्बन्धप्रत्यक्षे यावत्सम्बन्धिप्रत्यक्षत्वस्य तन्त्रत्वात्। न च कालाकाशादयस्सर्वे सम्बन्धिनः प्रत्यक्षाः। अथ यन्निरूपितस्संयोगः तयोः प्रत्यक्षत्वाद्युक्तं संयोगप्रत्यक्षमिति चेत्–न, दूरस्थयोर्घटपटयोः प्रत्यक्षे संयोगप्रत्यक्षापत्तेः, तस्य नित्यत्वात्। समवाये तु नैवम्। तस्याप्रत्यक्षत्वादिति चेत्–मैवम्, संयुक्ताविति प्रतीतेः समवेताविति प्रतीत्या तुल्ययोगक्षेमत्वादुभयोरनुमेयत्वस्य प्रत्यक्षत्वस्य वा तुल्यत्वात्। यदेव वा संयोगोत्पादकं तदेवाभिव्यञ्जकमस्तु। तस्मात्स्वरूपसम्बन्धेन तादात्म्येन वोपपत्तेर्न समवायसिद्धिः।

### स्वरूपसम्बन्धनिराकरणम्

[3]तत्त्वतस्तु–न स्वरूपस्य सम्बन्धत्वे मानमस्ति। किं सम्बन्धिस्वरूपमात्रं

---

१. 'इह घटो न' इति प्रतीतेः घटज्ञानाभावः, घटज्ञानाभावविशिष्टभूतलं वा विषयः तदा सिद्धोऽभावः पदार्थ इति पूर्वोक्तोऽत्रानुसंधेयः।

२. समवायस्य भिन्नत्वे तस्यानित्यत्वे 'समवायान्तरापत्तिः'। यदि निमित्तमात्राधीनत्वं समवायस्य, तदा कार्यसामान्येऽपि तथैव भवतु इत्यापत्तिः। अपि च समवायः सम्बन्धिभ्यामसम्बद्ध एव सम्बन्धिनौ सम्बन्धयेच्चेत्–हिमवद्विन्ध्यावपि सम्बन्धयेत्। यदि संयोगवत् सम्बद्ध एव सम्बन्धयति तदा सम्बन्धान्तरापेक्षत्वेनानवस्था इत्यादीनि पूर्वोक्तदूषणानि अनुसन्धेयानि।

३. भाट्टमते समवायस्थाने तादात्म्यसम्बन्ध एव स्वीक्रियते, न स्वरूपसम्बन्धः। तदिदं निरूपयति-तत्त्वतस्त्विति।

सम्बन्धः ? तद्धर्मो वा ? आद्ये एकैकस्सम्बन्धी सम्बन्धिद्वयं वा ? नाद्यः, सम्बन्धस्य द्विस्थत्वादेकैकस्वरूपे च तदभावात् । सम्बन्धिसम्बन्धशब्दयोरविशेषापत्तेश्च । नान्त्यः; विषयतायाः स्वरूपसम्बन्धत्वपक्षेऽतीतानागतविषयज्ञानेऽसम्बन्धत्वापत्तेः । एकस्य द्वयोर्वा सम्बन्धत्वे ज्ञानघटावित्यनुभवाद्घटज्ञानमिति प्रतीतेर्भेदो न स्यात् । न चैकत्र तदीयत्वाभावेन भेदः, ज्ञानातिरिक्ततदीयत्वाभावाज्ज्ञानस्य चोभयत्राविशेषात् । नापि तद्धर्मः; स हि नाभावः, प्रतियोग्यभावात् । भावोऽपि न जन्यः; ज्ञाने जन्यधर्माभावात् । न नित्यः; अनित्याश्रयस्य नित्यत्वे सामान्यत्वापत्तेः । न चैकव्यक्तौ तदस्ति । सकलवृत्तित्वे च सर्वव्यवहारापत्तिः । एतेन सम्बन्धान्तरं विना विशिष्टधीविषयत्वयोग्यत्वं स्वरूपसम्बन्ध इति **पक्षधरो**क्तमपास्तम् । कस्तर्हि भूतलाभावयोस्सम्बन्धः ? तादात्म्यमेव । तत्किमधिकरणात्मकोऽभावः ? न हि, भेदस्यापि सत्त्वात् ।

### तादात्म्यस्य भेदाभेदरूपत्वनिरूपणम्

ननु किमिदं तादात्म्यम् ? न तावदभेद एव, रूपघटयोर्धर्मधर्मिभावायोगात् । सम्बन्धस्य द्विष्ठत्वेनाभेदे सम्बन्धत्वायोगात् कार्ये जनिविनाशायोगाच्च । न हि घटोत्पत्तिनाशयोः मृज्जायते नश्यतीति वा कस्यचिद्धीः । न च भेदाभेदौ तत् । तयोर्हि किं शुक्तौ वेदान्तिमते रजततदभावयोरिव विषमा सत्ता ? भूतले घटतदभावयोरिव समाना वा ? आद्ये भेदोऽभेदो वैक एव स्यान्नोभयम्, प्रातीतिकत्वेन मिथ्यात्वादितरस्य । नान्त्यः; समानसत्ताकयोर्भावाभावयोरेकत्र विरोधात्, गुणगुणिनोर्भेदाभेदाप्रतीतेश्च । तत्त्वे वा रूपघटयोः पर्यायत्वापत्तेः । कश्चायं भेदः ? अभेदाभावो वा ? अन्यद्वा ? आद्ये—अभेदाभावो भेदः भेदाभावश्चाभेद इत्यन्योन्याश्रयः, अभेदाभावत्वेन भेदप्रतीत्यभावाच्च । न हि घटाभावाभावत्वेन घटधीः; किन्तु घटत्वेनैव । एतेनाभावाभावे [1]भावनियम इत्यपास्तम् । न हि घटाभावे घटाभवोऽस्तीत्युक्ते तत्र घटसत्ता भवति ।

ननु भ्रान्तेयं धीः, घटाभावे घटो नास्तीति प्रतीतेरिति चेत्—नः; आश्रय (।?) भेदेऽप्याश्रयाश्रयिभावात्[2] प्रमेयत्वे प्रमेयत्ववत् । तदाहुः—

'प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नता'

इति । नान्त्यः[3] तदपि भावोऽभावो वा ? नाद्यः; तत्रापि गुणगुणिवदभेदाभेदापेक्षयानवस्थापत्तेः । एतेन पृथक्त्वमेव भेद इति परास्तम् गुणे गुणाभावाच्च[4] । नान्त्यः; प्रतियोग्यनिरूपणान्न[5] प्रागभावादित्रयम् । अन्योन्याभावश्चेत्कथं तस्या-

---

१. अत्यन्ताभावाभावः प्रतियोगिस्वरूप इति नियम इत्यर्थः ।

२. प्रमेयत्वं प्रमेयम्, तथापि प्रमेये तद्वर्तत इत्याश्रयाश्रयिभावः स्वीकर्त्तव्यो भवति ।

३. 'अन्यद्वा' इति पक्षं निराकरोति ।

४. पृथक्त्वं गुणः । नीलं पीतात्पृथक् इति व्यवहारे गुणे नीले पृथक्त्वस्वीकारे गुणे गुणाङ्गीकारस्स्यादित्यर्थः ।

५. प्रतियोगिज्ञानं विनाभावव्यवहारानुपपत्तेः ।

भेदो भावस्तत्रैव स्यात्, तस्य नित्यत्वाद्व्याप्यवृत्तित्वाच्च। एवमभेदोऽपि गुण-गुणिनोः स्वरूपैक्यम्? अन्यद्वा? नाद्यः; मृद्घटयोः कार्यकारणभावायोगेन घटोत्पत्त्यसम्भवात्। भेदोऽप्यस्ति, तेनोत्पत्तिरिति चेत्-न; उत्पद्यमानं प्रागस्ति? न वा? अस्ति चेत् कस्योत्पत्तिः; तच्छब्दबुध्योरभावात्कथं वास्तित्वम्? नास्ति चेत्प्रागसतः पश्चात्सतश्च कथमभेदः? तस्माज्जनिविनाशवतः कारणाद्भेद एव। एतेन कारणे (न) साङ्ख्यवेदान्तिसम्मतस्सत्कार्यवादः परास्तः। तदुक्तम्—

'साङ्ख्यस्य वादः परिणामवादः
बौद्धस्य वादः खलु पुञ्जवादः।
आरम्भपक्षः कणभक्षपक्षे
वेदान्तवादस्तु विवर्त्तवादः॥ इति।

अत्रोच्यते–यद्यपि घटादिर्मृदादेर्भिन्न एव, अन्यथा जनिविनाशाद्ययोगात्, तथापि मृत्सत्वं विना घटे भेदः सत्तया नावच्छिद्यते, मृद्घटः नोलो घट इत्यभेदप्रतोतेः। न चेयं मृत्त्वजातिसम्बन्धविषया, मृदभावे तत्सम्बन्धायोगात्। घटशरावादिव्यवहारानुपपत्तेः तस्य तुल्यत्वात्। तेन भिन्नत्वे सत्यभिन्नसत्ताकत्वं तदेव सत्तानवच्छेदकभेदवत्वं तादात्म्यम्। न चैवं घटपटयोरप्येतदापत्तिः, भिन्नावित्यनुभवात्, कार्यकारणादिषु च तदभावात्। कारणपरतन्त्रतया सन्नपि भेदो न कार्यक्षमः। न च जातिव्यक्त्यादीनामभेदधीः समवायकृतेति वाच्यम्, तस्य सत्वेऽपि सम्बन्धिभ्यामत्यन्तभेदेनाभेदप्रतीत्यनियामकत्वात्। अभेदे च गुणगुणिनोरेव तदापत्तेस्तवापसिद्धान्ताच्च।

ननु घटपटभेदस्य तत्समत्वे कुतो नाभेदधीः? विलक्षणत्वं वा किंकृतमिति चेत्–न; एकप्रतियोगिकानन्तभेदे मानाभावाद्भेदैक्येऽप्येतदवच्छेदेन सत्तानवच्छेदकत्वमन्यत्र तदभावः; परमते वायौ समवाये रूपानिरूपितत्ववत्। भिन्नानां स्वरूपत एव तत्। ननु भेदाभेदयोर्विरोधात्कथमेकत्र वृत्तिरिति चेत्-न; समवाये रूपनिरूपितत्वानिरूपितत्ववत् परिमाणे ह्रस्वदीर्घवत् आकाशघटसंयोगे व्याप्यवृत्तित्वाव्याप्यवृत्तित्ववत् प्रतियोगिभेदेनाविरोधात्। अपेक्षाबुध्या प्रतोतावविरोधाच्च। सामान्यापेक्षया ह्यभेदः व्यक्त्यपेक्षया च भेदः। यथा दोर्घह्रस्वयोर्विरुद्धयोरप्यपेक्षाभेदादेकत्र वृत्तिः प्रतोतिबलादविरुद्धा तथात्रापीति न किञ्चिदेतत्। उक्तञ्चैतत्पार्थसारथिना 'एतदेव भदाभेदवादिनां मतम्' (इति)। तस्मात्समवायाभावात् सिद्धं तादात्म्यम्। तदुक्तं वार्तिके तर्कपादे—

'अथ अस्यात्मरूपत्वान्नान्यसम्बन्धकल्पना।
अभेदात्समवायोऽस्तु स्वरूपं धर्मधर्मिणोः॥
न हि तद्व्यतिरिक्तस्सन् सम्बन्धत्वं प्रपद्यते।
तस्मिंस्ताभ्यामभिन्ने तु न नानात्वं तयोर्भवेत्'॥

इति। तथा— (प्र० सू० १४९–१५०)

'स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः।
यदि ह्येकान्ततो भिन्नं विशेष्यं स्याद्विशेषणम् ॥
स्वानुरूपां सदा बुद्धिं विशेष्ये जनयेत्कथम्' ॥

(इति।) (प्र० सू० १४१-१४२)

न हि कदाचिदिह गवि गोत्वमिति धीरस्ति, किन्तु गौरयं शुक्लोऽयमित्यभेदेनैव। न चेयं भेदेऽवकल्पत इति पारमार्थिकमेव तादात्म्यम्। द्रव्यान्तरे जातिप्रतीतेर्द्रव्याद्भेदोऽप्यस्ति। न चैवं पूर्वप्रत्ययो बाध्यते। न हि व्यक्त्यन्तरे गोत्वं पश्यन् पूर्वव्यक्तेर्गवात्मकत्वं मिथ्या मन्यते। तेन भेदाभेदौ तादात्म्यमिति न्यायरत्नाकरः। **वरदराजीयेऽपि** 'विशेषसमवायौ हि नाङ्गीचक्रुः कुमारिलाः' इति। यत्त्वाकृत्यधिकरणे [1]**भट्टसोमेश्वरेणोक्तम्**—

'आश्रयी येन भिन्नोऽपि सम्बन्धेनाश्रये धियम्।
स्वानुरूपां सदा कुर्यात्समवायस्स उच्यते ॥

इत्याचार्योक्तेः समवायाख्यसम्बन्धस्य जात्या सहाधाराधेयसम्बन्धसस्त्वाद्दृष्टपक्षीसम्भव इति, तन्नानासमवायपरमित्येके। वार्तिकवरदराजोक्तिविरोधात्पूर्वोक्तदूषणग्रासाच्च क्षाल्यमाने तादात्म्यकुक्षिनिक्षिप्तत्वमेवेति तु तत्त्वम्। तथा च ग्रन्थकृतो विस्रब्धं व्यवहरन्ति-सामान्यात्मनाऽभेदः, व्यक्त्यात्मना च भेद इति। यस्तु प्रत्यक्षाप्रत्यक्षेष्वसम्भव इति, तच्छब्दस्य द्रव्यान्तरत्वात् त्र्यणुकस्य च निरवयवत्वाद् वायोश्च प्रत्यक्षत्वाददूषणम्। न च गुरुत्वस्य प्रत्यक्षत्वप्रसङ्गः, भेदाभेदेन दत्तोत्तरत्वात्। स्वरूपसम्बन्धे तु न किञ्चिद्दूषणम्। तस्माद्युक्तः पञ्चानामुद्देश इति।

## शक्तेरतिरिक्तपदार्थत्वसाधनम्

शक्तौ तु विप्रतिपत्तिः[2] वन्हिर्दाहानुकूलातीन्द्रियाद्विष्ठधर्मवान् न वा? तत्र गौतमीया आहुः शक्तिर्न पदार्थान्तरम्। सा हि द्वेधा वाच्या-स्वाभाविकी आधेया च। न तावदाद्या; तस्यां मानाभावात्। ननु वन्हौ सन्निहितस्य मण्यादेर्दाहप्रतिबन्धकत्वं दृष्टम्। [3]तत्त्वञ्च किञ्चित्सामग्रीविघटकत्वम्। न चात्रान्यस्य विघटकत्वं सम्भवतीति शक्तिरूपसामग्रीविघटनमेव क्रियते। तेन प्रतिबन्धकत्वानुपपत्तिर्मानमिति चेत् न; प्रतिबन्धकाभावरूपकारणविघटनेनैव प्रतिबन्धकत्वोपपत्तेः।

ननु प्रतिबन्धकाभावस्य कारणत्वग्रहे तद्विघटकत्वेन मणेः प्रतिबन्धकत्वग्रहः, गृहीते च तस्मिन् प्रतियोगिनि तदभावस्य कारणताग्रह इत्यन्योन्याश्रय इति चेत् न; मण्यादिसंसर्गाभावत्वेनोपस्थितौ कारणताग्रहात्।

---

१. न्या० सु० पृ० ३७५।

२. वह्निः दाहानुकूलातीन्द्रियाद्विष्ठधर्मसमवायी दाहजनकत्वात् अदृष्टवदात्मवद् इत्यनुमानेन शक्तेरतिरिक्तपदार्थत्वं प्रसाधयन्ति मीमांसकाः।

३. तत्त्वं च—प्रतिबन्धकत्वं चेत्यर्थः।

ननूत्तेजकसमवधाने प्रतिबन्धकसत्त्वेऽपि दाहदर्शनान्न तदभावस्य कारणत्वमिति चेत्-न; उत्तेजकाभावविशिष्टं यत्प्रतिबन्धकं तदभावस्य कारणत्वात्। अत्र चोत्तेजकाभावरूपविशेषणाभावात् तद्विशिष्टप्रतिबन्धकस्याभावोऽस्त्येवेति न काचित् क्षतिः।

ननु विशिष्टस्य विशेषणविशेष्यतत्सम्बन्धात्मकत्ववत् विशिष्टाभावस्यापि विशेषणविशेष्यसम्बन्धाभावात्मकत्वात्तेषाञ्च[1] कारणत्वे व्यभिचारान्न कारणत्वमिति चेत्-न; विशिष्टाभावस्याप्यवच्छेदकभेदेन त्रितयातिरिक्तत्वात्। यद्यपि प्रतियोगिभेदान्नाभावो भिद्यते।[2] तथाभावे एकघटप्रतियोगिकानां प्रागभावप्रध्वंसात्यन्तान्योन्याभावानामभेदापत्तेः, तथापि प्रतियोगितावच्छेदकभेदेऽभावो भिद्यते।[3] अन्यथा वायौ पृथिव्यादित्रयरूपाभावे निश्चितेऽपि[4] रूपवान्न वेति संशयानुपपत्तेः, यावद्विशेषाभावस्य निर्णीतत्वात्। तत्र यथा रूपत्वलक्षणावच्छे-

---

१. उत्तेजकाभावविशिष्ट (प्रतिबन्धक) मण्यभावो विशिष्टाभावः। स च मन्त्रौषध्याद्युत्तेजके सत्यपि मण्यभावात् उत्तेजकाभावविशिष्टप्रतिबन्धकमण्यभावो यत्र, तत्र विशेष्याभावरूपः तथा यत्र उत्तेजकः मणिश्चोभयं नास्ति तत्रापि विशेष्या भावरूपः। यत्र तु उत्तेजकं प्रतिबन्धकमणिश्चोभयं वर्तते तत्र विशिष्टाभावो विशेषणाभावरूपः, अथवा विशेषणविशेष्यसम्बन्धाभावरूपः। एवंरूपस्य विशिष्टाभावस्य कारणत्वाङ्गीकारे यत्र विशेष्याभावरूपकारणत्वं तत्र विशेषणाभावरूपकारणत्वं नास्ति, यत्र विशेषणाभावरूपकारणत्वं तत्र विशेष्याभावरूपकारणत्वं नास्ति इति परस्पर व्यभिचारमाशङ्कते—कारणत्व इति।

२. तथाभावे—प्रतियोगिभेदादेवाभावभेद इत्यभ्युपगमे इत्यर्थः।

३. अन्यथा—प्रतियोगितावच्छेदकभेदेनैव अभावभेद इत्यनभ्युपगमे।

४. वायौ नीलपीतादिविशेषाभावनिश्चये सत्यपि रूपं नास्तीति प्रतीतिसिद्धरूपत्वावच्छिन्नप्रतियोगिताकाभावानिश्चयादेव रूपवान्न वेति सन्देहो जायते। अयं च सन्देहः प्रतियोगितावच्छेदकभेदेन अभावभेदाङ्गीकार एवोपपद्यते। रूपं नास्तीत्यत्र रूपत्वं सामान्यधर्मः प्रतियोगितावच्छेदकम्, नीलपीतादिरूपं नास्तीत्यत्र नीलपीतादिरूपत्वं विशेषधर्मः प्रतियोगितावच्छेदकं, इत्यत्र प्रतियोगितावच्छेदकस्य भिन्नत्वात् नीलरूपं नास्तीति विशेषाभावापेक्षया रूपं नास्तीति सामान्याभावो भिन्नः। यदि प्रतियोगिभेदेनाभावभेद इष्यते तदा नीलरूपपीतरूपादिविशेषरूपापेक्षया सामान्यस्य कस्यचिदतिरिक्तस्य रूपस्याभावेन प्रतियोगिभेदासिद्धया नीलरूपं नास्ति इति विशेषाभावस्य रूपं नास्तीति सामान्याभावस्य च भेदानापत्तिः। अपि च निरुक्तरीत्या विशेषाभावसामान्याभावयोर्भेदासिद्धौ वायौ विशेषरूपाभावस्य निश्चितत्वात् रूपवान् न वेति सन्देहानापत्तिः। अतः प्रतियोगितावच्छेदकभेदेनाभावभेदोऽङ्गीकरणीयः। तथा सति वायौ नीलपीतादिविशेषरूपत्वावच्छिन्नप्रतियोगिताकाभावे सत्यपि रूपत्वाच्छिन्नप्रतियोगिताकाभावानिश्चयात् रूपवान्न वेति सन्देहः उपपद्येतेत्याशयः।

दकभेदाद् रूपविशेषाभावे (भ्यो) रूपत्वावच्छेदकावच्छिन्नप्रतियोगिको रूपसामान्याभावो भिद्यते, यथा वा प्रागभावादीनां पूर्वापरकालसंसर्गतादात्म्यरूप प्रतियोगितावच्छेदकभेदाद्भेदः, तथा प्रतियोगितावच्छेदकोत्तेजकभावभेदाद् विशिष्टाभावोऽपि भिन्नः। न च मण्यभावस्य कारणत्वे मणेः प्रतिबन्धकाभावाभावरूपस्य स्वतो विघटनरूपत्वात्प्रतिबन्धकत्वं न स्यादिति वाच्यम्, तत्प्रयोक्तुः पुरुषादेः प्रतिबन्धकत्वात्। स्वार्थे कप्रत्यय इत्यपि केचित्।[1] न च प्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकान्तराभावेन दाहप्रसङ्ग इति वाच्यम्[2], प्रतिबन्धकासमानाधिरणप्रतिबन्धकाभावस्य कारणत्वात्। एवं तावन्न सहजा शक्तिः।

नाप्याधेया। तथाहि–न तावद् 'व्रीहीन् प्रोक्षति' इति व्रीहीणां कर्मत्वात्तस्य च क्रियाजन्यफलशालित्वाभावात्कर्मत्वानुपपत्त्या शक्तिकल्पनं युक्तम्, जलसंयोगाश्रयत्वेनैव तदुपपत्तेः। न च जलसंयोगस्य प्रोक्षणस्वरूपान्तर्गतत्वान्न प्रोक्षणफलत्वमिति वाच्यम्, ग्रामं गच्छतीत्यत्रापि ग्रामस्याकर्मत्वप्रसङ्गात्। यथा हि संयोगस्य प्रोक्षणान्तर्गतेर्न फलत्वम् एवं ग्रामस्य गमनावच्छेदकत्वान्न कर्मत्वं स्यात्।

ननु गमनस्य पादविहारात्मकत्वाद् ग्रामसंयोगस्य (न) गमनात्मकत्वम्, किन्तु तत्फलत्वमेव। जलसंयोगस्य तु प्रोक्षणान्तर्गतत्वमावश्यकम्, अन्यथा कृतेऽपि जलप्रक्षेपे व्रीहिसंयोगाभावे प्रोक्षणं न जातमिति व्यवहारायोगात्। तस्मात्संयोगस्य प्रोक्षणान्तर्गतेर्न फलत्वमिति शक्तिरेव कल्प्येति चेत्-न; शिलां प्रोक्षति इत्यन्यत्रापि संयोगस्याफलत्वेन शक्तिकल्पनापत्तेः। तस्मात्प्रोक्षणसत्त्वेऽपि संयोगरूपफलाभावादेव न जातमिति व्यवहारः। किञ्च घटं जानामीति ज्ञानक्रियाजन्यसंस्कारवत्त्वादात्मनोऽपि कर्मत्वापत्तिः। अतो नेदं कर्मत्वम् किन्त्वीप्सितत्वाद्येवेति। किञ्च व्रीहिषु प्रतिव्यक्ति शक्तयः कल्प्यन्ते ? व्यासज्यवृत्तिरेका वा ? नाद्यो गौरवात्। नान्त्यः; व्यासज्यवृत्तिजन्यधर्मस्य द्वित्वादेः किञ्चिदाश्रयनाशनाश्यत्वनियमात् किञ्चिद्व्रीहिनाशे तस्या अपि नाशादितरेषां यागोपयोगो न स्यात्। न च गणिकाचरणाधातेनाशोकस्य पुष्पोद्गमाच्छक्तिसिद्धिः। आन्तरवाद्याधातादृष्टभागान्तरजनितवृक्षान्तरादेव तदुपपत्तेः। रवाद्याधातादिना हि वृक्षावयवोपचयापचयाभ्यां खण्डपटवत् खण्डवृक्षाद्युत्पत्तिस्सर्वसम्मता। [3]न च कांस्यादिषु भस्मादियोगेन शुद्धिदर्शनाच्चण्डालस्पर्शेनेना-

१. दाहं प्रति क्वचित् मणेः प्रतिबन्धकत्वं क्वचिच्च मन्त्रौषधादीनां प्रतिबन्धकत्वं यत्र णणिरूपप्रतिबन्धकं वर्तते तत्र मन्त्रौषाध्यदिप्रतिबन्धकान्तराभावेन प्रतिबन्धकाभावरूपकारणत्वस्याक्षततया दाहो भवतु इत्यापत्तिः क्रियते न चेत्यादिना।

२ समाधत्ते–प्रतिबन्धकासामानाधिकरणेति। मन्त्रौषधादिप्रतिबन्धकान्तराभावस्य मणि रूपप्रतिलन्धकसमानाधिकरणत्वात् न दाहापत्तिरिति भावः।

३. कांस्यादेः चण्डालाद्यस्पृश्यस्पर्शे न भोजनादिरूपकार्यार्हता शक्तिमत्कांस्यादेरेव भोजनार्हत्वात्। अस्पृश्यस्पर्शे सति शक्तेर्नाशात् भस्मसंयोगे तु पुनः शक्तेरुत्पादात्

शुद्धिदर्शनाच्छ्ववितसिद्धिः । [1]भस्मादिसंयोगध्वंसस्य चाण्डालस्पर्शाद्यभावसहितस्य (भस्मादिप्रतियोगिकानादिसंसर्गाभावविरहस्य च) शुद्धि (चाशुद्धि) पदार्थत्वात् । तदभावस्य वाऽशुद्धिपदार्थत्वात् । भस्मादिसंयोगेन कांस्यादिद्रव्ये देवतासन्निधिरेव क्रियते । सैव वा शुद्धिः, तद्विरहश्चाशुद्धिः । तस्मात्कारणत्वातिरिक्ता शक्तिः कुलधर्ममात्रं मीमांसकानाम् इति ।

**अत्रास्मत्पितृचरणा आहुः**—तन्तूनां घटं प्रति कारणता कुतो न स्यात् ? व्यभिचारादिति चेत्-न; व्यभिचार एव किंनिबन्धनः ? कारणत्वाभावादिति चेत्-न; [2]अन्योन्याश्रयापत्तेः । ननु यदेव तव शक्तिनियामकमन्वयव्यतिरेकादि तदेव मम कारणत्वनियामकमिति किं शक्त्येति चेत्-न; तृणारणिमणिष्वन्वयव्यतिरेकाभावेन कारणत्वग्रहासम्भवात् । कार्यतावच्छेदकजातित्रयकारणतात्रयकल्पनापेक्षया एकशक्तिमत्त्वेन कारणत्वस्य लाघवात् । अन्यथा तत्तदधिकरणेनैव विशिष्टधीसम्भवादधिकरणभिन्नोऽभावो न स्यात् । न स्याच्च समवयोऽपि तत्तत्स्वरूपसम्बन्धैरेव विशिष्टप्रतीत्युपपत्तेः । अथ तत्र लाघवाद्भिन्नोऽभावस्तद्वदत्रापि लाघवाद्भिन्ना शक्तिः । व्रीहियवादौ विकल्पोच्छेदापत्तेश्च । अन्यथा वन्हिवद्यागे वैजात्येन भिन्नार्थत्वाद्विकल्पो न स्यात् । [3]'एकार्थास्तु विकल्पेरन्'[2] इति न्यायाभावात् ।

अथ तन्तूनां न घटं प्रति हेतुता, अदृष्टाभावादिति चेत्-न; अदृष्टमार्गप्रवेशे शक्तिद्वेषः कुतः ? अदृष्टस्य क्लृप्तत्वादिति चेत्-न; शक्तिरपि क्लृप्तैव । तथाहि—'व्रीहीन् प्रोक्षति' इति कर्मत्वानुपपत्त्या शक्तिसिद्धिः । संयोगाश्रयत्वात्तदुपपत्तिरिति चेत्-न; अदृष्टाश्रयत्वादृते तन्मात्रबोधने एतद्वाक्यवैयर्थ्यात् । किञ्च 'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्यैः पुरोडाशस्य यागसाधनत्वे बुद्धे तत्प्रकृतिभूतद्रव्यापेक्षा 'व्रीहिभिर्यजेत' इत्यनेन निवर्त्यते । तेनात्र यागीयव्रीहित्वेनोद्देश्यता, न तु व्रीहित्वमात्रेण, लौकिकव्रीहिषु वैयर्थ्यात् । अतो व्रीहिद्वारा प्रोक्षणस्य यागार्थत्वाज्जलसंयोगस्य च जलशोषे नाशेन कालोत्तरभावियागार्थत्वासम्भवाद्

---

भोजनार्हता । तथा च शक्तिसिद्धिरित्याशयेन शङ्कते—न चेति ।

१. भस्मादि संयोगध्वंसस्येति—यत्र कांस्यादौ आदौ अस्पृश्यवस्तुसंयोगः ततः भस्मादिसंयोगः ततः भस्मादिसंयोगनाशानन्तरं भूयोऽपि अस्पृश्यस्पर्शः तत्काले पूर्वतनभस्मादिसंयोगध्वंससत्त्वात् भस्मादिसंयोगध्वंसमात्रस्य शुद्धिपदार्थत्वे तदानीमपि शुद्धत्वापत्तिः । तद्वारणाय चण्डालस्पर्शाद्यभावसहितेति संयोगध्वंसस्य विशेषणम् । चण्डालस्पर्शकाले चण्डालस्पर्शाभावो नास्तीति भस्मादिसंयोगध्वंसे चण्डालस्पर्शाभावविशिष्टत्वं नास्तीति न दोषः ।

२. तन्तूनां घटं प्रति कारणत्वाभावावगतिः तं प्रति व्यभिचारज्ञानाधीनाव्यभिचारज्ञानं च कारणत्वाभावज्ञानाधीनमिति परस्पराश्रयः ।

३. 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यवृत्तिस्स्यात्प्रधानस्य' जै० सू० १२.३.१० । इत्यधिकरणे एकप्रयोजनकानामेव विकल्पः, न तु भिन्नप्रयोजनकानामिति साधितत्वात् ।

उत्पवनाद्यङ्गबलाददृष्टोपायापेक्षेण क्रतुना स्वरूपेण तदग्रहणाच्चावश्यमदृष्टं कल्प्यम्। ततश्च सिद्धा शक्तिः। तर्ह्यात्मनिष्ठमेवादृष्टं कल्प्यताम् किं व्रीहिनिष्ठैर्बहुभिःकल्पितैरिति चेत्-न; व्रीहीनिति द्वितीयाश्रुतिबाधापत्तेः, वैयधिकरण्यस्यानुचितत्वात्। प्रत्येकं कल्पने प्रतिसंस्कार्यं संस्कारावृत्तिन्यायेन प्रतिव्रीहि भिन्नप्रोक्षणापत्तेः। यत्तु किञ्चिदाश्रयनाशे नाशप्रसङ्ग इति तन्मीमांसाध्ययनाभावकृतम्। पेषणेन सर्वव्रीहिनाशेऽपि यथा न नाशः, (अ) पूर्वसाधनत्वस्य संस्कारानपायात् तथात्रापि। अत एव साहित्यं बहुत्वञ्च विवक्षितम्, अन्यथा ग्रहैकत्ववत्तयोरविवक्षापत्तेः। तेन[1] 'अग्निमाधत्ते' 'ग्रहं सम्मार्ष्टि' 'यूपं छिनत्ति' इत्यादयोऽपि व्याख्याताः।

यदपि प्रतिबन्धकाभावेनान्यथासिद्धेर्न शक्तिकल्पनमिति तन्न; प्रतिबन्धकाभावस्य दण्डत्ववदवच्छेदकतयान्यथासिद्धत्वेनाकारणत्वात्। ननु न प्रतिबन्धकाभावस्यावच्छेदकता युक्ता, स्वतन्त्रकारणत्वात्। न हि दण्डस्य चक्रावच्छेदकत्वं चक्रस्य वा तदवच्छेदकत्वम्। तेन विनिगमकाभावाद्दण्डचक्रवद् वन्हिप्रतिबन्धकाभावयोरपि कारणता। अन्यथा प्रतिबन्धकाभाव एव कारणं वन्हिरेवावच्छेदकं किं न स्यात्? मैवम्; अन्योन्याश्रयापत्तेः। प्रतिबन्धकाभावस्य हि कारणत्वे सिद्धे विनिगमनाविरहः तस्माच्च कारणत्वमिति। नियतपूर्वभावित्वात्कारणतेति चेत्-न; दण्डत्वादिभिर्व्यभिचारात्।

नन्वनयैव दिशा दण्डचक्रादीनामपि अकारणता स्यात्। न स्यात्; तथाहि–यद्यपि कारणत्वं न फलोद्देशप्रवृत्तकर्तृव्यापारव्याप्यत्वम्, कर्तरि चरमकारणे चाभावात्। तेन करणत्वमेव तत्, न कारणत्वम्। करणत्वञ्च कारणत्वव्याप्यम्। नापि नियतपूर्ववर्तित्वम्, एकघटे रासभस्य दण्डत्वादेरेच तत्त्वात्, तथाप्यनन्यथासिद्धनियतपूर्ववर्तित्वं कारणत्वम्। पूर्ववर्तित्वञ्च प्रागभावच्छिन्नसमयवर्तित्वम्। न च प्रागभावेऽव्याप्तिः, स्वविशिष्टे स्वस्यावृत्तेरिति वाच्यम्, यस्मिन् समये प्रागभावस्तदा विद्यमानस्य तत्त्वात्। ननु समयेऽव्याप्तिः। समये समयावृत्तेरिति चेत्-न; इदानीं क्षण इति प्रतीत्या समयस्यापि समयवृत्तित्वात्। न चात्माश्रयः, प्रमेयत्वे प्रमेयत्ववत् प्रामाणिकत्वात्। न चैतत्प्रतिबन्धकाभावेऽस्ति, एकघटे रासभस्येव नियतपूर्वभावेऽपि वक्ष्यमाणरीत्याऽन्यथासिद्धत्वात्।

---

१. इदन्त्ववधेयम्–'ग्रहं संमार्ष्टि, 'यूपं छिनत्ति' इत्यादिषु संमार्गछेदनादीनां संस्काराणां दृष्टप्रयोजनजनकत्वेन प्रति संस्कार्यमावृत्तिः युक्ता। अतस्तत्रत्यमुद्देश्यगतमेकत्वमविवक्षितम्। व्रीहीन् प्रोक्षति इत्यत्र प्रोक्षणेन व्रीहिषु दृष्टप्रयोजनाभावात् अदृष्टमेव कल्पनीयम्, कल्प्यस्य अदृष्टस्य अनेकत्वकल्पनायां गौरवात् सर्वव्रीह्यवच्छेदेन एकादृष्ट कल्पनमुचितमिति व्रीहीनित्यत्र बहुत्वस्य साहित्यस्य चोद्देश्यगतत्वेऽपि विवक्षा युक्तेति ग्रन्थकर्तुराशय इति। एवं दृष्टादृष्टफलभेदविवेचनात् नात्र ग्रहैकत्वाधिकरणविरोध शङ्कावकाशः।

प्रागभावावच्छिन्नसत्तायोगित्वाभावेन पूर्ववर्तित्वाभावात्। अत एव प्रागभावोऽपि न कारणम्। न ह्यन्वयव्यतिरेकमात्रात्कारणता, कारणकारणेऽपि सत्वात्। तन्त्ववयवानां हि न स्वातन्त्र्येण तौ, किन्तु तन्तुद्वारा। स्वातन्त्र्यञ्च व्यापारवत्स्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगित्वमित्याहुः। कार्योत्पत्त्यनुगुणव्यापार(ज)त्वं हि तन्तौ तन्त्ववयवे चास्ति। तत्रावयवे कार्यानुगुणो व्यापारो व्यापारवत्स्वरूपमेव, तन्तोः संयोगरूपव्यापारवत्वात्। एवं कुलालपितुरपि। तद्व्यावृत्तयेऽतिरिक्तेति। तन्तौ हि कार्यानुगुणो व्यापारः संयोगो न व्यापारवान्, संयोगेऽन्यस्य व्यापारस्याभावात्। तेन **स (स्व) व्यापाराद्भिन्नो** व्यापारः तद्वत्त्वाद्युक्तं तन्तोः कारणत्वम्, न तु तन्त्ववयवकुलालपित्रादेः। तत्र व्यापारवत एव व्यापारत्वादित्यर्थः। **कार्यं (स-य?) मादाय** यस्यान्वयव्यतिरेकौ स तस्य व्यापारः। दण्डादीनां रूपा (ध्य ? द्य) वच्छिन्नानामेव कारणत्वं न स्वरूपेण। ननु समवायस्य पूर्वं निरस्तत्वात्कथं कारणत्रैविध्यम्? तादात्म्यस्य समवायपदेऽभिषिक्तत्वादिति न किञ्चिदेतत्। केचित्त्वसमवायिकारणं सर्वत्र नेच्छन्ति, घटैकत्वे तदजन्यत्वात्।

### कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वनिरासः

यदपि कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति तन्न; कारणीभूतप्रागभावप्रतियोगित्वेन घटस्य स्वोत्पत्तेः प्रति (बन्ध) कत्वापत्तेः। नन्विष्टापत्तिः, अन्यथोत्पन्नस्य पुनरुत्पत्तिस्स्यादिति चेत्-न; तत्सामग्रीत एव घटान्तरोत्पत्तिरापाद्यते? सामग्र्यन्तराद्वा? नाद्यः;एकदैककारणात्सजातीयकार्यद्वयायोगात्, एकोत्पत्तेः प्रतिबन्धकत्वाच्च। नान्त्यः, इष्टापत्तेः। किञ्चैवं प्रागभावस्य प्रतिबन्धकाभावत्वेनैव कारणता स्यान्न तत्त्वेन, अन्योन्याश्रयश्च स्यात्। सिद्धे हि प्रागभावस्य कारणत्वे तत्प्रतियोगिनः प्रतिबन्धकत्वम्, तत्सिद्धौ च तदभावस्य कारणत्वमिति। उक्तञ्चाभावस्य कारणत्वं **भट्टाचार्यैः विज्ञानेश्वरेण पितृभिश्च**।

किञ्च-इतोऽपि न प्रतिबन्धकाभावः कारणम्। तस्य हि प्रतिबन्धकत्वाभावेन तत्त्वम्? मण्याद्यभावत्वेन वा? नाद्यः; कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वादन्योन्याश्रयापत्तेः। नान्त्यः; अन्यथासिद्धत्वात्। तथाहि-मणिस्तावद्दाहप्रागभावस्याग्रिमसमयसम्बन्धे हेतुः, न तु दाहानुत्पादं प्रति। अनुत्पादस्य प्रागभावरूपस्यानादित्वेनाजन्यत्वात्, येन दाह[1]प्रागभावाभावे दाहे मण्यभावो हेतुस्स्यात्, किन्तु मणिना प्रतिबन्धो नाम दाहप्रागभावस्योत्तरसमयसम्बन्धः क्रियते। मण्यभावाद्दाहप्रागभावस्योत्तरसमयसम्बन्धाभावो जायते। न चाग्रिमसमयसम्बन्धाभावो दाह एवेति वाच्यम्, दाहस्य प्रागभावमात्रव्यतिरेकरूपत्वेन[2] ततो भिन्नत्वात्। तेन यथा रूपगन्धयोः समकालोत्पत्तावपि रूप-

१. प्रागभावाभावे दाह इति—दाहप्रागभावकाले दाहानुत्पादात् यदा दाहो जायते तदा दाहप्रागभावस्य अभावो वर्तत इति (दाह) तत्प्रागभावाभावरूपो दाह इत्याशयः।

२. ततो भिन्नत्वात्-दाहप्रागभावाग्रिमसमयसंबन्धाभावाद्भिन्नत्वादित्यर्थः।

प्रागभावो न गन्धे हेतुः, [1]अन्यथासिद्धत्वात् । तथा दाहप्रागभावस्याग्रिमसमयसम्बन्धाभावं प्रति मण्यभावस्य हेतुत्वेनान्यथासिद्धत्वान्न दाहे मण्यभावः कारणम् ।

ननु रूपगन्धादीनां समकालानां यथा घटो हेतुस्तथा मण्यभावोऽप्युभयत्र हेतुः । [2]अन्यथा [3]दण्डादेरप्युक्तान्यथासिद्धिसम्भवेन घटहेतुत्वं न स्यादिति चेन्न; प्रथमोपस्थितत्वेन वन्हिदण्डादेः कार्यहेतुत्वग्रहे दण्डाभावस्य प्रतियोग्यधीनतया पाश्चात्यस्य पूर्वाबाधेन कार्यप्रागभावाग्रिमसमयसम्बन्धे हेतुत्वात् । [4]न च मणेर्दाहाप्रतिबन्धकत्वे मणिकाले दाहः कुतो नेति वाच्यम्, दाहप्रागभावाग्रिमसमयसम्बन्धसामग्र्या बलवत्वात् । न चैवं मण्यभावोऽपि तत्र हेतुः, प्रायश्चित्तस्य नित्यकर्मणाञ्च दुःखप्रागभावाग्रिमसमयसम्बन्धहेतुत्वेऽपि तदभावस्य दुःखाहेतुत्वात् ।[5] न च मण्यभावजन्यतावच्छेदके गौरवम्, मणितदभावयोः समानविधयान्वयव्यतिरेकत्वेन पूर्वक्लृप्तकारणत्वाच्च तस्यैव न्याय्यत्वात् । अन्यथा प्रायश्चित्ताभावस्यापि लाघवेन दुखँ प्रति हेतुतापत्तेः ।

किञ्च मणिकालेऽपि दाहदर्शनान्न तदभावः कारणम्, उत्तेजकाभावविशिष्टमण्यभावस्तदास्त्येवेति चेत्-न; किमिदमुत्तेजकत्वम् ? प्रतिबन्धकताविधटकत्वम् ? मणित्वादितत्तद्रूपमेव वा ? नाद्यः; तत्रापि न मणित्वेन प्रतिबन्ध-

१. रूपप्रागभावस्य रूपोत्पत्तिहेतुत्वेनान्यथासिद्धत्वादिति भावः ।

२. अन्यथा–मण्यभावस्य दाहं प्रति स्वरसतः प्रतीयमानकारणत्वानङ्गीकारे ।

३, दण्डादेरपीति– घटादिकारणत्वेन सिद्धानां दण्डादीनामपि घटादिरूपकार्यप्रागभावाग्रिमसमयसम्बन्धाभावं प्रति हेतुत्वाङ्गीकारापत्त्या अन्यथासिद्धिर्वक्तुं शक्या । अतश्च दण्डादेर्घटादिहेतुत्वं न सिद्ध्येदित्यभिप्रायः ।

४. मणेर्न दाहप्रबिन्धकत्वं किन्तु दाहप्रागभावाग्रिमसमयसम्बन्धहेतुत्वमेवेति चेत् तर्हि मणेर्दाहाप्रतिबन्धकत्वे मणिकालेऽपि दाहापत्तिरिति शङ्कते–नचेति । समाधत्ते–दाहप्रागभावेति ।

५. मण्यभावस्य दाहप्रागभावाग्रिमसमयसम्बन्धाभावं प्रति हेतुत्वे तादृशसम्बन्धाभावत्वस्य जन्यतावच्छेदकत्वं वाच्यम् । तथा सति गौरवं तदपेक्षया मण्यभावस्य दाहं प्रति हेतुत्वाङ्गीकारे दाहत्वमेव जन्यतावच्छेदकमिति लाघवमित्यभिप्रायेण शङ्कते–न चेति ।
समाधत्ते–मणितदभावयोरिति–अयं भावः–कार्यकारणभावे न लाघवगौरवयोस्तन्त्रत्वम्, किन्तु अन्वयव्यतिरेकयोरेव । मणेर्दाहप्रागभावाग्रिमसमयसम्बन्धं प्रति, मण्यभावस्य च दाहप्रागभावाग्रिमसमयसम्बन्धाभावं प्रति च अन्वयव्यतिरेकवत्वात् जन्यतावच्छेदकस्य गुरुत्वेऽपि दाहप्रागभावग्रिमसमयसम्बन्धाभावं प्रत्येव मण्यभावस्य हेतुत्वं न्याय्यम् । अन्यथा अन्वयव्यतिरेकयोस्तन्त्रत्वमनादृत्य लाघवमात्रपुरस्कारे प्रायश्चित्तस्य दुःख प्रागभावाग्रिमसमयसम्बन्धं प्रति हेतुत्वात् तद्व्यतिरेकमुखेन प्रायश्चित्ताभावस्य दुःख प्रागभावाग्रिमसमयसम्वन्धाभावं प्रति सिद्धमपि हेतुत्वमनादृत्य लाघवात् दुःखं प्रत्येव हेतुत्वापत्तिर्दुर्वारेतिभावः ।

कत्वम्। उत्तेजकसत्त्वेऽपि तदापत्तेः उत्तेजकाभावविशिष्टमणित्वेन प्रतिबन्धकत्त्वेऽन्योन्याश्रयात्![1] तथाहि विशिष्टमण्यभावस्य कारणताग्रहे तत्प्रतियोगित्वेन प्रतिबन्धकत्वग्रहः, तद्ग्रहे च (तद्विघटकत्वेनोत्तेजकत्वग्रहः उत्तेजकत्वग्रहे च) तदभावविशिष्टमण्यभावस्य हेतुतेति। अथ कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम्, तदा चक्रकापत्तिः। तथा हि प्रतिबन्धकाभावस्य कारणत्वे गृहीते कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकत्वग्रहः, तद्ग्रहे च प्रतिबन्धकविघटकत्वरूपोत्तेजकग्रहः, तद्ग्रहे च तदभावविशिष्टप्रतिबन्धकाभावस्य कारणताग्रह इति। नान्त्यः; संशयोत्तरप्रत्यक्षे विशेषदर्शनस्येव मणिकालिकदाहे उत्तेजकस्यैव विशेषकारणत्वेन प्रतिबन्धकाभावस्य कारणत्वकल्पनाया मग्नत्वात्। अतस्तत्रोत्तेजकमेव हेतुः।

ननु विशेषदर्शनस्यापि प्रतिबन्धकाभावसम्पादकतैव न तु तत्त्वेन प्रत्यक्षहेतु त्वमिति चेत् न; अपरकोटिसामग्री तत्र(न?) प्रतिबन्धिका। न च तदभावोऽनेन क्रियते, पूर्वसंशयानुदयापत्तेः। तेनोत्तेजकस्यैव हेतुत्वम्, न तु तदभावविशिष्टप्रतिबन्धकाभावस्य। उत्तेजकानामानन्त्येन तद्विशिष्टाभावस्य कारणत्वग्रहासम्भवाच्च। किञ्च नाभावकूटः कारणम्, समुदायिभिन्नकूटाभावात्। अनेकाभावे कारणत्वापेक्षया शक्तेरेव लघुत्वात्। अन्यथा स्वरूपभिन्नसमवयो न स्यात्। किञ्च दाहाभावे मणित्वेनैव हेतुता, न तु मण्यभावाभावत्वेन, गौरवात्। तेन प्रतिबन्धकाभावाभावस्य कार्याभावाहेतुत्वेनान्यथासिद्धव्यतिरेकत्वान्न प्रतिबन्धकाभावः कारणम्, न च मण्यभावाभावो मणिरेवेति वाच्यम्, अभावाभावे भावनियमस्य निरस्तत्वात्, मणिर्मण्यभावाभाव इति पृथक्प्रतीतेः। मणित्वतदभावाभावत्वयोः सहभावेनैवेत्यपि तेन रूपेणाहेतुत्वात्। पराक्रान्तञ्चात्र भगवन्नृसिंहाद्यैरिति दिक्।

## अभावस्य अकारणत्वाशङ्का

अभावस्य क्वापि कारणत्वाभावाच्च। कथं तर्ह्यनुपलम्भस्याभावधीहेतुत्वम्? तत्रापि हि मणिवत्प्रतियोगिज्ञानमभावज्ञानप्रागभावोत्तरसमयसम्बन्धे हेतुः। तदभावश्चोत्तरसमयसम्बन्धाभावहेतुरित्यन्यथासिद्धव्यतिरेकत्वान्नानुपलम्भः प्रमाणं स्यादिति चेत्-न; अनुपलम्भज्ञानं हि अभावज्ञानेकारणं नानुपलम्भ इति केचित्। तन्न; अनवस्थापत्तेः।

नन्वभावस्य न क्वापि कारणत्वमिति मीमांसकाः, तत्कुत इति चेत्,इत्थम्—अभावत्वेन हेतुना साध्या? प्रागभावत्वादिना वा?[2] नाद्यः,सर्वमुक्तिवादिनोऽन्त्य-

---

१. इदन्तु प्रतिभाति तथाहि—विशिष्टमण्यावस्य इति ग्रन्थसमानार्थक एव 'प्रतिबन्धकाभावस्य कारणत्वे' इत्युपरितनग्रन्थो दृश्यते। उभयत्रापि उपपादनपङ्क्तिरप्यविशिष्टा। अतश्चक्रकदोषाकार एव दर्शितः। (नान्योन्याश्रयः) अन्यतरेण ग्रन्थेनालमिति।

२. अभावस्य अकारणत्वानुमाने (अभावः न कारणं अभावत्वात् इत्यत्र) अभावत्वं हेतुः उत प्रागभावत्वादिति विकल्प्य क्रमेण दूषणमाह—नाद्य इति।

ध्वंसे हेतुत्वाभावेन व्यभिचारात्। ननु कार्याजनके दण्डे फलोपधानाभावेऽपि योग्यतारूपं यथा हेतुत्वम् तथाऽन्त्यध्वंसेऽपि हेतुतावच्छेदकधर्मवत्वाद्योग्यतास्त्येवेति चेत्-न; अभावस्य भाववृत्तिहेतुतावच्छेदकद्रव्यत्वादिधर्मवत्वेन योग्यता चेत्तदाऽसिद्धिः, भाववृत्तितादृशधर्मस्य द्रव्यत्वादेरभावेऽसत्वात्। अथाभाववृत्ति हेतुतावच्छेदकाभावत्वरूपधर्मवत्वेन योग्यतोच्यते, तन्न; अभावे हेतुत्वासिद्धेः। हेतुतावच्छेदकधर्मत्वं हि योग्यता, न चाभावे हेतुतास्ति।

### प्रागभावस्वरूपविवेचनम्

नान्त्यः, किं नाम प्रागभावत्वम् ? प्रतियोगिजनकाभावत्वं चेत्-स्वव्याप्येतरहेतुसत्त्वे हि यद्व्यतिरेके कार्यव्यतिरेकस्स हेतुः। न च प्रागभावव्यतिरेके कार्याभावः, प्रागभावव्यतिरेकस्य कार्यतया तत्सत्त्वे तद्व्यतिरेकाभावात्। अनन्यथासिद्धपूर्वभावित्वं हि कारणत्वम्। पूर्वभावित्वञ्च प्रागभावावच्छिन्नसमयवर्तित्वम्। न च प्रागभावे तदवच्छिन्नसमयवर्तित्वम्। अतः पूर्ववर्तित्वाभावान्न तद्गर्भे कारणत्वम्। न च प्रतियोगिजनकाभावत्वं प्रागभावत्वम्, असिद्धेः।

ननु प्रागभावोपलक्षितसमयसत्त्वमेव पूर्वभावित्वम्। तच्च प्रागभावेऽप्यस्त्येव। अत एवेतरसत्त्वे प्रागभावाभावे कार्यरूपे जातस्य पुनरनुत्पत्तेः कार्यव्यतिरेकः। अतस्सिद्धा हेतुतेति चेत्-न; विशेषणत्वे सम्भवत्युपलक्षणत्वायोगात्। अन्यथा प्रागभावस्य हेतुत्वे सिद्धे जातजन्यापादनम् तस्माच्च हेतुत्वमित्यन्योन्याश्रयात्। किन्तर्हि प्रागभावत्वम् ? गन्धानाधारसमयानाधारत्वम्, उत्तरावधिकाभावत्वं वा।

ननु यो यन्नाशः स तज्जन्यः। घटश्च प्रागभावनाशत्वात् ? तज्जन्यः ध्वंसवदिति चेत्—न; घटप्रागभावाभावघटयोः सहभावनैयत्येऽपि घटस्य प्रागभावाभावरूपत्वेन प्रतीतेर्ध्वंसस्य[1] तदभावाभावत्वेन प्रागभावापत्तेरानन्त्यापत्तेरप्रयोजकत्वाच्च। अभावस्याकारणत्वे कथमनुपलब्धिः प्रमाणमिति चेद्-इत्थम्-घटवति इह घटाभाव इत्यभावविशेष्यको भ्रमस्तावदस्ति। तत्र च प्रकार एव भ्रमत्वं न धर्म्यंशे, बाधाभावात्। न च धर्म्यसत्वे सन्निकर्षायोगाच्चाक्षुषत्वायोगः, अभावे आधारे तदपेक्षया विशेष्ये तदनपेक्षणात्। स च संसर्गांशे भ्रमो न संसर्ग्यंशे तस्यैव बाधा्। सर्सर्गिणोश्चाबाधात्। स च भ्रमो नाभावांशे प्रत्यक्षः, तत्र तस्याविद्यमानतया सन्निकर्षाभावात्। न च ज्ञानलक्षणासन्निकर्षः, चाक्षुषज्ञाने विशेष्ये ज्ञानलक्षणानङ्गीकारात्। तेन कविकाव्यमूलभूतविशिष्टवाक्यार्थज्ञानादौ विशेष्येऽपि ज्ञानलक्षणो यथा मानसस्सन्निकर्षः, तथाभावविशेष्यकेऽपि वाच्यः। तत्र चाभावांशेऽनुमानाद्यसंभवात्स्मृतिर्वाच्या। न च सा युक्ता, तत्तोल्लेखप्रसङ्गात्। न ह्यस्माकं गुरुमत इव स्मृतिप्रमोषः। न चाभावधीरेव भ्रमः, तस्या आसत्तिरूपत्वात्, विशेष्ये भ्रमत्वाभावात्, प्रकारे एव भ्रमत्वात्। तस्मादभावांशे

१. तदभावाभावत्वेनेति–ध्वंसाभावाभवत्वेनेत्यर्थः।

**प्रमेव**। तत्र चानुपलब्धिरेव कारणं नान्यत्। तत्र चानुपलब्धिज्ञानस्यासम्भवादनवस्थापत्तेः स्वरूपसत्याश्चानुपयोगादापादनद्वारा स हेतुः। नन्वापादनं तर्कात्मकत्वात्प्रमाणसहकारि न तु स्वयं प्रमाणम्। अतः कथं तस्याः प्रामाण्योक्तिरिति चेत्–शृणु? आहार्यो हि व्यापकारोपस्तर्कः। सः नाभावधोहेतुः किन्तु तद्धेतुर्व्याप्यारोपः तद्धेतोरिति न्यायात्। न च व्याप्यारोपः प्रमाणसहकारीति युक्तं प्रमाण्यम्। तेन सर्वत्रानुपलब्धेः प्रमाणत्वाभावेऽपि स्थलविशेषे प्रामाण्यम्। तच्चापादनं गृहांशे प्रत्यक्षम्, आपादनकार्यस्याभावज्ञानस्य गृहांशे प्रत्यक्षत्वात्, घटांशे स्मृतिः। अभावभ्रमे सतोऽपि घटस्य दोषेणाभानात्। कथं विहिताकरणं प्रत्यवायहेतुरिति चेत्––न; विहितविरुद्धश्वसितनिमिषितादेर्हेतुत्वात्। तदुक्तं **भट्टपादैः**—

'विहितं यदकुर्वंस्तु करोत्यन्यदचेतनः।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते'॥ इति।

अपूर्वाधिकरणेऽप्युक्तम्–'न च लोके कश्चिदभावः कारणत्वेन दृष्टः' इति। प्रागभावश्चावच्छेदक एव न तु कारणम्। कथं तर्हि 'नानृतं वदेत्' इत्यनृतवदनाभावोऽङ्गमिति चेत्–फलस्य पुरुषाङ्गत्वं प्रयाजादिषु च कारणत्वाभावात्। तस्मान्नाङ्गत्वं कारणत्वम्; किन्त्वन्यदेव पारार्थ्यादीति भाट्टैकदेशिनो **विज्ञानेश्वरादय**श्चाहुः।

अपूर्वाधिकरणे **भट्टसोमेश्वरास्तु**–केवलस्य भावान्तरं विनाऽभावस्य कारणत्वं नेति वार्तिकार्थः, न त्वभावस्य कारणत्वाभावः। विहिताकरणविशिष्टनिमिषितादेः कारणत्वे नागृहीतविशेषणान्यायेनाकरणस्यैव हेतुत्वात्। यत्तु 'नाभावेन स जन्यते' इति वार्तिकं तद् गुर्वाज्ञप्ताकरणे गुरोरवज्ञानिमित्तकोपदर्शनाद् विहितावज्ञारूपाशयविशेषसहितादकरणात्प्रत्यवायः, न शुद्धादभावात्। निमेषादेर्हेतुत्वञ्च शुद्धमेव। 'विहितस्याननुष्ठानान्नरः पतनमृच्छति' इति स्मृतिबाधापत्तेरित्याहुः। आस्तां मतद्वयम्। सिद्धं तावत्प्रतिबन्धकाभावस्याहेतुत्वम्। तेन किञ्चित्सामग्रीविघटकत्वेनैव प्रतिबन्धकत्वमिति शक्तिसिद्धिः।

किञ्च पुत्रोत्पत्तिसपिण्डमरणाद्यैराशौचं पुंसि जायते। न च तत्र शक्तिं विना गतिरस्ति। पापादृष्टमेव तत्रे (दि ?) ति चेत्–न; तस्य निषिद्धक्रियाजन्यत्वादिहच तदभावात्। एतेनाद्यक्षणमारभ्य दशाहान्त्यक्षणपर्यन्तक्षणाः तदूर्ध्वसा वा आशौचमिति निरस्तम्, तेषां साधारण्यात्। किञ्च बीजादेरङ्कुरोत्पत्तेर्मूषिकाघ्राताच्च तदनुत्पत्तेर्घ्राणनाश्या शक्तिः कल्प्यते (कल्पते ?)। तत्रापि घ्राणाभावः कारणमिति चेत्–न; घ्राणक्रियोत्तरं तद्ध्वंसादङ्कुरोत्पत्तिप्रसङ्गात्। प्रागभावः कारणं न ध्वंस इति चेत्–न; त्वन्मते संसर्गाभावस्य कारणत्वात्। अथ क्वचित् प्रागभावः क्वचिच्च ध्वंसः कारणम्, तन्न; अभावत्वाविशेषात्। न हि प्रतियोगितावच्छेदकप्रागूर्ध्वकालभेदं विनाऽभावयोर्भेदोऽस्ति, लाघवेनाभावस्यैकत्वात्,

प्रतियोगिवैजात्यस्य चानुपयोगात् । अथ प्रागभावे वैलक्षण्यमुच्येत तद्वरं बीजनिष्ठमेव कल्पितम् । उक्तञ्चैतत्पार्थसारथिना[1] ।

यत्तु वृक्षान्तरादेव पुष्पोद्‌गम इति तन्न; कान्तायाः पादाघातादेव वृक्षान्तरोत्पत्तिर्न पुंस इत्यत्र शक्तिं विना नियामकाभावात् । वस्तुतस्तु खण्डोत्पत्तिरसिद्धैव । सोऽयं पटस्तमेवानुभवामीति प्रत्यभिज्ञानुव्यवसाययोर्भ्रमत्वे मानाभावात्, यावत्कारणनाशस्यैव कार्यनाशहेतुत्वात् पटान्तरोत्पत्तौ कारणाभावाच्च । शिष्टकारणादेवोत्पत्तौ दशतन्तुकेऽपि नवतन्तुकप्रतीत्यापत्तेः, दशैव दग्धा न पट इति प्रतीतेश्च ।

किञ्च खण्डपटोत्पत्तौ उपनयनविवाहादिसंस्कृतशरीराभावे भार्यात्वाद्यभावात् सर्वविप्लवः प्रसज्येतेति दिक् ।

यत्तु क्षुद्रपादे आचार्यैश्चमसे तक्षणादिना द्रव्यान्तरत्वोक्तेः खण्डोत्पत्तिसिद्धान्तोऽस्तीति, तत्रायमाशयः—ब्रह्मब्राह्मणादिशब्दानां न्यूनत्वाधिक्येऽपि न लोकवेदयोर्भेद इत्युक्तं लोकवेदाधिकरणे । शब्दस्तु स्वमते द्रव्यमेव । तेन भाष्यं वैलक्षण्यपरं व्याख्येयम् ।

यत्तु भस्मादियोगप्रतियोगिकानादिसंसर्गाभावविरहश्शुद्धिः, तदभावोऽशुद्धिरिति, तन्न; अस्ति हि शुद्धतरशुद्धतम इति धीः । एवमशुद्धावपि । तथाच शास्त्रमपि—

'सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम्'

इति । न (च) हि शुद्धेरभावरूपत्वे तारतम्यं सम्भवति । 'तद्धि भावैकनियतम्' इत्युदयनाचार्यप्रमुखाः । किञ्च—तृणारणिमणीनामेकशक्तिमत्त्वेन कारणत्वाच्छक्तिसिद्धिः, कार्यतावच्छेदककारणतावच्छेदकतत्सम्बन्धगतानेकजातिकल्पनापेक्षया तस्या एव लघुत्वात् । अन्यथाङ्गुलिदण्डसूत्रादिजन्ये घटेऽपि वैजात्यापत्तेः । अथाङ्गुलिसूत्रादौ विलक्षणं दण्डत्वमस्त्येवेति चेत्—न; तृणादावपि विलक्षणं तृणत्वाद्यस्तु कारणत्वावच्छेदकम्, किं कार्यवैजात्येन ?

ननु तृणे फूत्कारोऽरणौ मन्थनम्, मणौ सूर्यांशुरिति सहकारिनियमो न स्यात् । अन्यथा तृणमन्थनाभ्यां वन्ह्युत्पादापत्तेः, तृणत्वादिना हेतुत्वात् । अस्तु वा तृणाद्यन्यतमत्वेन हेतुतेति चेत्—न; व्यक्तिविशेषे तृणगतशक्त्युद्बोधे वा सहकारिविशेषनियमोपपत्तेः । अन्यतमत्वेन हेतुत्वे कारणत्रयापेक्षयैकशक्तिमत्वेन तत्त्वस्य लघुत्वात् । अन्यथा व्रीहियव-बृहद्रथन्तरादिषु[2] सम्मीलन समुद्रध्यानादिसहकारिवैचित्र्येण यागे वैजात्यापत्तेर्विकल्पो दत्तजलाञ्जलिस्स्यात् । उक्तञ्च[3]

---

१. तर्कपादे अर्थापत्तिप्रकरणे । ८० पृष्ठे-१९१५ वर्षे—निर्णयसागरप्रेस मुद्रिते ।

२. 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' 'बृहति प्रस्तूयमाने समुद्रं मनसा ध्याये' दिति विहितं सम्मीलनं समुद्रमनोध्यानञ्च ।

३. पदार्थतत्त्वनिरूपणम् पृ. ५७ (क. सं)

**शिरोमणिना**—'एवं शक्तिरप्यतिरिच्यते' इत्यादिना। किञ्च व्रीहियवयोर्विकल्पो न स्यात्, वन्हिवद्यागेऽपि वैजात्यापत्तेः। भिन्नयागार्थत्वे चैकार्थत्वाभावेन विकल्पायोगात्। एकार्थत्वे हि स युज्यते। तत्त्वेकशक्तिमत्त्व एव सिद्ध्यति नान्यथा। तेन व्रीह्यभःवावच्छिन्नयवत्वेन हेतुतेति चेत्—न; तथापि हेतुतावच्छेदकद्वयापेक्षयैकशक्तिमत्त्वस्यैव लघुत्वात्। तत्त्वन्तु नैकघटे दण्डद्वयस्य हेतुता। हेतुतावच्छेदकावच्छिन्नयत्किञ्चित्त्वस्यापेक्षणात्। अत एव विकल्पः। तच्च प्रकृतेऽपीति दिक्। द्वित्वाश्रयत्वेन कारणत्वमिति चेत्—न; यववाक्यज्ञाने व्रीहिषु साधनत्वं कथं भायात्? अपेक्षाबुध्यभावेन द्वित्वाज्ञानात्।

### शक्तेर्नित्यानित्यत्वविकल्पेन दुर्निरूपत्वाक्षेपः

ननु शक्तिरपि दुर्घटैव। तथाहि—सा किं नित्या? जन्या वा? नाद्यः; अनित्ये जातिभिन्ननित्यधर्मायोगात्। किञ्च सा यदि सर्ववन्हिवृत्तिरेका; तदा क्वचित्प्रतिबन्धे वन्ह्यन्तरे दाहो न स्यात्, शक्तेरेकत्वात्। 'नित्ये नित्यैव सा शक्तिरनित्येऽभावतुहेजा' इति वार्तिकविरोधाच्च। प्रतिव्यक्ति भिन्नत्वे शक्त्यानन्त्यम्। नित्यत्वे शक्तिमति नष्टे शक्तेरवस्थानासम्भवाच्च। नान्त्यः, शक्तिं प्रति वन्हेः कारणत्वात्तन्नियामकत्वेन शक्त्यापत्त्याऽनवस्थापत्तेः। अथ शक्त्यन्तरमन्तरा स्वरूपेणैव वन्हेश्शक्तौ हेतुता, तर्हि दाहेऽपि तथास्तु किं शक्त्या? किञ्च मणिसत्त्वेऽपि वन्हेर्दाहस्स्यात्, शक्तिमतो वन्हेस्सत्वात्। मणिना प्रतिबन्धान्न दाह इति चेत्—कोऽयं प्रतिबन्धः? किं नाशः? अभिभवो वा? नाद्यः, मण्यपसारणे दाहो न स्यात्, शक्तेर्नष्टत्वात्। न चापसारणे शक्त्यन्तरोत्पत्तिः, उत्पादकाभावात्। न[1] चापसारणं तथा, ततः प्राक् शक्त्यभावापत्तेः। न च क्वचिद्वन्हिः, क्वचिच्चापसारणं हेतुः, अननुगमात्। न च तृणारणिवदेकशक्तिमत्त्वेन तथा, शक्तिं प्रति शक्त्यापत्तेः शक्तिधारापत्तेश्च। नान्त्यः, अभिभवाभावस्योद्बोधस्य जन्यत्वाच्चानवस्थापत्तरिति चेत्—

### शक्ते नित्यत्वसाधनम्

अत्र ब्रूमः—सर्ववन्हिवृत्तिरेकैव नित्या शक्तिः, तस्याश्चाश्रयरूपावच्छेदकभेदेन प्रतिबन्धाद् वन्ह्यन्तरे दाहो युक्तः तस्याश्च मणिनाभिभव एव प्रतिबन्धः। अभिभवश्चोद्भवाभाव एव। उद्भवश्च कार्याभिमुखस्वरूपमेव। आभिमुख्यञ्च प्रागभावस्याग्रिमसमयसम्बन्धाभावः। मणिना च शक्तेरभिभवो नाम स्वशक्त्या दाहप्रागभावस्याग्रिमसमयसम्बन्धो जन्यते। स एव प्रतिबन्धः। अत एव तदभावहेतुत्वेनान्यथासिद्धत्वान्न दाहं प्रति मण्यभावो हेतुरिति दिक्। एतेन प्रतिबन्धकाभावो हेतुः वन्हिश्चावच्छेदक इति वैपरीत्यशङ्का परास्ता। मणिमन्त्राद्यनेकाभावानां विशिष्टानां हेतुत्वापेक्षया सर्वावच्छिन्नवन्हित्वेन हेतुत्वेऽतिलाघवात्। एवं मणिशक्तिप्रतिबन्धकत्वमुत्तेजकत्वमिति धाराशक्तिपक्ष एव युज्यते। न च

१. अपसारणं तथेति—मण्यपसारणं शक्त्यन्तरोत्पादकमित्यर्थः।

प्रतिबन्धकासमानाधिकरणप्रतिबन्धकाभावो हेतुः, उत्तेजकप्रतिबन्धकस्य दाहप्रतिबन्धकत्वादर्शनात् । न चोत्तेजकस्य प्रतिबन्धकत्वाभावसम्पादकत्वम्, प्रतिबन्धकप्रतिबन्धकत्वेन तदुपपत्तेः । प्रतिबन्धककालीनकार्यं प्रत्युत्तेजकस्यैव सिद्धिकालीनानुमितिं प्रति सिषाधयिषाया इव विशेषहेतुत्वे लाघवात्, विशिष्टाभावकूटस्य तु हेतुत्वे गौरवात् । तस्मान्नित्यैव शक्तिः ।[1] यत्त्वनित्ये भावहेतुजा इति वार्त्तिकं तत् शक्त्युद्भवे भावस्य हेतुत्वाभिप्रायं व्याख्येयम् ।

किञ्च मण्याद्यभावस्याप्येकशक्तिमत्त्वेनैव हेतुत्वं वाच्यम् । तथाहि–मण्याद्यभावोऽपि न मणित्वावच्छिन्नाभावत्वेन हेतुः; मणिकालेऽपि वन्हौ तदन्योन्याभावसत्त्वेन दाहापत्तेः । नापि प्रागभावो ध्वंसोऽत्यन्ताभावो वा हेतुः, व्यभिचारात् । संसर्गाभावत्वस्य च पारिभाषिकत्वेन मण्यभावत्रयस्यैव हेतुतया तृणारणिवदेकशक्त्यापत्तेः । एतेन संसर्गाभावत्वमखण्डोपाधिरिति परास्तम्, मानाभावात् । नाप्यन्योन्याभावभिन्नाभावत्वम्, भेदप्रतियोगिकभेदाभावात् । अत एव तृणादिवन्मणेर्ध्वंसे प्रागभावे च दाहः न तु दण्डचक्रादिवत्सर्वापेक्षा, त्रितयान्यान्यत्वस्य च प्रत्येकान्योन्याभावैरुत्पत्तौ त्रितयप्रतियोगिकभेदान्तरकल्पनायोगात् ।

किञ्च मणिमन्त्राद्यभावाः प्रत्येकं हेतुः ? मिलिता वा ? नाद्यः; तृणादिवन्नानाहेतुत्वापेक्षयैकशक्तिमत्त्वेन सर्वावच्छिन्नवन्हित्वेन वा तत्त्वे लाघवात् । नान्त्यः एकविशिष्टस्येतरस्य हेतुत्वे विनिगमनाविरहात् । कूटस्य च तत्त्वे इयतां हेतुतेति नियामकाभावेन घटाभावादेरपि तत्त्वापत्तेः । यस्य कार्यविघटकत्वं तदभावो हेतुरिति चेत्, सिद्धं तर्हि प्रतिबन्धकाभावत्वेन हेतुत्वं न तु मण्यभावत्वेन । ततश्च परस्पराश्रयः । भिन्नकूटाभावेन तृणादिवच्छक्त्यापत्तेश्च । ननु तृणादिवद्दण्डचक्रादावप्येकशक्तिमत्त्वाद्धेतुत्वं स्यादिति चेत्–न; तद्वदेव यत्किञ्चिदेकमात्र सत्वे कार्यापत्तेः, शक्तिमतस्सत्त्वात् ।

किञ्च फलोपहितानामस्त्येन, स्वरूपयोग्यता तु प्रत्येकमेव । एतेन दण्डत्वस्य हेतुतावच्छेदकत्वं परास्तम् । अङ्गुलिजलदण्डसूत्रादेश्चक्रभ्रमौ घटे च व्यभिचारात् । चक्रभ्रमिजनकत्वं तादृशसंयोगाश्रयत्वं वा दण्डत्वमिति तु सर्वलोकविरोधात्तादृशसंयोगं प्रत्येव हेतुत्वानिर्वाहाच्च मूर्खप्रतारणमात्रम् ।

---

१. मूले यत्त्विति । अयमाशयः । यदि शक्तेर्नित्यानित्यपदार्थसाधारण्येन नित्यत्वस्वीकारे तदा 'नित्ये नित्यैव सा शक्तिः, अनित्ये भावहेतुजा' इति वार्तिकविरोधो भवति । तत्र हि अनित्यवह्न्यादिवृत्तिशक्तेर्मण्यभावादिरूपकारणजन्यत्वप्रतिपादनात् । विरोधपरिहारस्तु इत्थम् मण्यभावस्य न प्रतिबन्धकाभावत्वेन दाहं प्रति कारणता तथात्वे मणिमन्त्राद्यनेकाभावानां कारणत्वं वक्तव्यमिति गौरवं स्यात् । अतो मणेर्दाहप्रागभावाग्रिमसमयसम्बन्ध एव हेतुत्वं स्वीक्रियते । तदभावस्य च तदभावे । इत्थञ्च 'अनित्ये भावहेतुजा' इति वार्तिकस्य वह्न्यादिजनकभावसामग्रीत एव अनित्यवह्न्यादिवृत्तिशक्तेरभिव्यक्तिरित्याशयः ।

किञ्च दण्डत्वमेव कारणतावच्छेदकम् न तु सूत्रत्वमित्यत्र किं नियामकम् ? तादृशसंयोगाश्रयत्वं सूत्रत्वमङ्गुलीत्वं वा किं न स्यात् ? अस्त्विति चेत्-न; जलत्वादिना परापरभावायोगेन जातिसङ्कराप्तेः। तस्मादङ्गुलिदण्डादेरपि तृणादिवदेकशक्तिमत्त्वेनैव हेतुत्वम्। तेन मण्यभावस्य हेतुत्वे शक्त्यापत्तेस्तदवच्छिन्नस्य वन्हेरेव तत्त्वमिति दिक्।

किञ्च तुलादिदिव्यप्रतिष्ठादिविधिना तुलादेर्जयपराजययोरर्चानाञ्च पूज्यत्वादेर्व्यवस्था शक्ति विना न स्यात्। तत्रात्मनिष्ठमेवादृष्टं कल्प्यम् इति चेत्-नः पुरुषान्तरेषु तदुपयोगात्। तत्तदात्मनिष्ठानन्तादृष्टकल्पनेऽतिगौरवम्, वैयधिकरण्यञ्च। एतेनादृष्टस्य क्लृप्तत्वादात्मनिष्ठं तदेव कल्प्यते न तु व्रीह्यादिनिष्ठा शक्तिरित्यपास्तम्। अहङ्कारलक्षणो देवतासन्निधिरेव तत्र संस्कारैः क्रियत इति चेत्-देवतासन्निधिर्वा केन दृष्टचरः, नाममात्रभेदाच्च। किञ्च घटादिपदस्यार्थबोधकत्वं प्रमाणप्रमेययोस्सम्बन्धं विना न युक्तमिति शब्देऽपि शक्तिसिद्धिः। ईश्वरस्य ज्ञानमिच्छा वा सम्बन्ध इति चेत्-न; तयोस्सम्बन्धत्वादर्शनात्। तस्मात्सिद्धं शक्तिः पदार्थान्तरम्। तथा चागमोऽपि--

'देवात्मशक्तिं स्वगुणैर्निगूढम्' इति।
'यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मके।
तस्य सर्वस्य या शक्तिस्सा त्वं किं स्तूयसे मया'॥

इति। सद्भावाप्रतियोग्यात्मादि, असद्भावप्रतियोगि घटादि। सा च त्रिविधा-सहजशक्तिः, आधेया शक्तिः, पदशक्तिश्चेति। अन्त्या त्वग्रे वक्ष्यते।

## प्रेरणायाः पदार्थान्तरत्वविचारः

नन्वस्ति प्रेरणापि पदार्थान्तरम्। तथा हि यजेतेत्यादिलिङस्तावद्वेदेऽस्ति पुरुषप्रवर्तकत्वम्। तच्च स्वव्यापारबोधनेनैव, आचार्यादेस्तथा दर्शनात्। स च व्यापारोऽलौकिको वेदेनेष्यते। कथं तत्र शक्तिग्रह इति चेत्--प्रवर्तनासामान्येनेत्यवेहि। प्रवृत्तिहेतुर्हि प्रवर्तयितुर्व्यापारः प्रवर्तनेत्युच्यते। स च लोके आज्ञाध्येषणादिः ज्ञानेच्छादिः सम्भवति। वेदे तु वक्तुरभावादलौकिकस्सिध्यति। प्रवर्तनात्वेन च सामान्येन शक्तिग्रहे [1]पक्षधर्मताबलादलौकिको विशेषस्सिध्यति। स चान्यस्याभावाच्छब्दस्याभिधेयः। सैव शाब्दोभावनेति वार्तिकभट्टसोमेश्वरादयः। सा चार्थभावनाविषया शक्तिरेवेति केचित्। तन्न; शक्तेस्सिद्धरूपत्वेनाव्यापारत्वात्। इष्टसाधनत्वमेव प्रवर्तनात्वेन वाच्यमिति पार्थसारथिमिश्राः। तन्न; तस्यापि भावकव्यापारत्वाभावेन भावनात्वायोगात्। तदुक्तम्—

'अभिधाभावनामाहुरन्यामेव लिङादयः'। इति।

---

१. पक्षधर्मतेत्यादि-अयं भावः-लोके गामानयेत्यादौ लिङः प्रवर्तयितृव्यापाररूपप्रवर्तनाबोधकत्वस्य क्लृप्तत्वेन वैदिकलिङः पुरुषप्रवृत्तिजनकतया च 'वैदिकलिङादिशब्दाः पुरुषप्रवृत्त्यनुकूलव्यापारवाचिनः स्वप्रयोगसमनन्तरभाविप्रवृत्तिजनकत्वात् यथा

अत्राभिदधातीत्यभिधा शब्दः । षष्ठीतत्पुरुषः कर्मधारयो वेति [1]न्यायरत्नमालायां व्याख्यातम् । उच्यते प्रेरणापि लिङः प्रवृत्त्यनुकूलो व्यापारः शक्तावेवान्तर्भवतीति केचित् । अन्ये त्वनियतपदार्थवादिनो मीमांसका इति प्रवादात्पदार्थान्तरमाहुः ।

**इष्टसाधनत्वस्य विध्यर्थत्वनिरासः**

ननु लोके वेदे चेष्टसाधनताज्ञानमेव प्रवर्तकं दृष्टमतस्तदेव विध्यर्थो न प्रेरणास्तीति चेत्, श्रूयताम्–नेष्टसाधनत्वं प्रवर्तकम्, चन्द्रमेघच्छायादौ प्रवृत्त्यापत्तेः । न च तत्र कृत्यसाध्यत्वज्ञानं प्रतिबन्धकम्, आख्यातार्थकृतेरनन्वयापत्तेः । अथ यागानुकूलकृतिमानित्यर्थः, तथा कृतिसाध्यत्वमप्यर्थस्स्यात् । कृतिसाध्यताविशिष्टस्य वाच्यत्वे कृतिं प्रति साध्यत्वम् इष्टं प्रति साधनत्वं कथमेकवाक्ये प्रतीयेत ? साध्यद्वयस्य साधनद्वयस्य चैककृतावन्वयायोगात् । न च यजेतेत्यत्र कृतिद्वयमस्ति ।

किञ्च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ यागोऽवश्यं साधनत्वेन विधेयः, तेन लक्षणयेष्टहेतुताधीसम्भवान्न वाच्यता । अनन्यलभ्यो हि शब्दार्थः । न च लक्षणादिलभ्ये शक्तिः, गङ्गापदे तीरवत् । ननु ज्योतिष्टोमाभिन्नो यागः स्वर्गसाधनमिति प्रथमान्तप्राधान्येन यागबोधो न करणत्वेनेति चेत्–न; यागस्य साधनत्वाभावे तत्सामानाधिकरण्याज्ज्योतिष्टोमपदस्य नामत्वाभावाज्ज्योतिष्टोमाभेदस्यैवासम्भवात् । [2]अत्र तत्प्रख्यन्यायसम्भवेऽप्युद्भिदादौ यागसामानाधिकरण्यादेव नामत्वम् । अन्यथोद्भित्खनित्रमित्यादि [3]गुणविधायकं स्यात् । नन्वभेदे तृतीयेयं धान्येन धनोतिवत् । तेनाभेदान्नामत्वमिति चेत्–न; न ह्यत्र पाणिन्याद्यनुशासनम् : धान्येनेति त्वित्थम्भूतलक्षणे तृतीया । नीलमुत्पल-

लौकिकलिङादिशब्दाः' इत्यत्रानुमाने पुरुषप्रवृत्त्यनुकूलव्यापाररूपसामान्यसाध्यस्य प्रकृते पक्षसम्बन्धबलात् वेदे वक्तुरभावात् अलौकिकत्वेन विशेषरूपेण सिद्धिरिति भावः ।

१. अभिधीयत इति अभिधा प्रवर्तना । सैव च पुरुषप्रवृत्तिं भावयतीति भावनामाहुरिति । अथवा अभिधायाः शब्दस्य भावना अभिधाभावना, इति न्यायरत्नमालाया विधिनिर्णयस्य ग्रन्थसन्दर्भः ।

२. अत्र तत्प्रख्यन्यायसम्भवेऽपि–ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यत्र 'त्रिवृत्पञ्चदशसप्तदश एकविंशः एतानि वाव तानि ज्योतींषि । य एतस्य स्तोमाः' इति ज्योतिष्टोमनिर्वचनशास्त्रस्य सत्त्वेऽपीत्यर्थः ।

३. गुणविधायकं स्यात्–अत्रेदमवधेयम् । ज्योतिष्टोमेव स्वर्गकामो यजेतेत्यत्र' एतानि वाव तानि ज्योतींषि इत्यादि मन्त्रलिङ्गबलात् तत्प्रख्यन्यायेन ज्योतिष्टोमपदस्य यागनामत्वसम्भवेऽपि 'उद्भिदा यजेत' इत्यत्र तथा कस्यचिदपि मन्त्रलिङ्गस्यादर्शनात् यागसामानाधिकरण्यस्यैव उद्भिच्छब्दस्य नामत्वे प्रयोजकत्वमेष्टव्यम् अन्यथा उद्भिच्छब्दस्य उद्भिद्यतेऽनेनेति यौगिकव्युत्पत्त्या खनित्रवाचितया उद्भिच्छब्दः गुणपर एव स्यादिति भावः ।

मित्यादौ मत्वर्थलक्षणयाऽभेदः । तेन क्वाप्यभेदस्य विभक्त्यर्थत्वाभावान्न तद्वशेनं नामत्वम्, किन्तु यागसामानाधिकरण्यादेव । तेन ज्योतिष्टोमाभिन्नो याग इत्यादिवाक्यार्थकथनं शिष्यधीबम्भ्रणमात्रं वेदत्रिप्लावकञ्चेत्तुपेक्ष्यम् । अतो नेष्टसाधनत्वं वाच्यम् । विशेषतश्चैतद् विधिचर्चायां शब्दतत्त्वे वक्ष्यामः । लिङस्तु प्रवृत्तिहेतुव्यापारे शक्ति [परिग्र] हात् परिशेषात् प्रेरणासिद्धिरिति दिक् । विशेषस्तु मत्कृतौ वार्तिकटीकायां भावनाविनोदे च ज्ञेयः ।

### सङ्ख्यायाः पदार्थान्तरत्वशङ्का

ननु सङ्ख्यापि पदार्थान्तरमस्ति । तथाहि–चतुर्विंशतिर्गुणाः, वायोर्नव गुणाः, पञ्च कर्माणि, बहूनि सामान्यानि; एकस्समवायः इति धीरस्ति । न चायं भ्रमः, बाधकाभावात् । न [1]चैकार्थसमवायेन तद्धीः प्रमैवेति युक्तम् । परम्परासम्बन्धस्य शतसङ्ख्यायामपि सत्त्वेन चतुर्विंशतिरित्यादिनियमासम्भवात्, विलक्षणसम्बन्धादविलक्षणप्रतीत्ययोगाच्च । न च कुसुम्भे तद्रक्तपटे च रक्तत्व प्रतीतौ (?) समवायसमवायिसंयोगरूपविलक्षणसंयोगेऽप्यविलक्षणस्यानुभवसिद्धत्वात् । किञ्च त्रीणि शतानि त्रीणि सहस्राणीति लोकवेदयोरस्ति प्रयोगः । न च तत्र सहस्राधिकरणे त्रित्वमस्ति, तस्यापेक्षाबुद्धिजन्यत्वात् । सहस्रमेकत्वानि असमवायिकारणम् न तु त्रित्वा (दोति) हि ते मतम् । घटे एव परम्परया संख्याधीसम्भवेन वैपरीत्यापत्तेश्च । किञ्च घटैकत्वे इति प्रयोगो न स्यात्, एकत्वे असमवायिकारणरूपैकत्वाभावाच्च । न चात्र द्वाविितवत् प्रातिपदिकानुवादत्वम्, एकत्वस्य प्रातिपदिकार्थस्य द्वित्वावच्छिन्नत्वाभावात् । घटैकत्वं हि तदर्थः, न तु द्वित्वम् । न चोभयनिरूपणीयत्वसाधर्म्यादौपचारिकत्वम्, वैपरीत्यापत्तेः । एकार्थसमवायेन घटत्वे एकत्ववत् द्वित्वप्रतीत्यापत्तेश्च । न च रूपत्वे एकार्थसमवायोऽप्यस्ति ।

---

१. एकार्थसमवायेनेति । अयमत्र भावः । चतुर्विंशतिर्गुणा इत्यत्र गुणे चतुर्विंशतिसङ्ख्याप्रतीतेः गुणे गुणानङ्गीकारादिति न्यायेन सङ्ख्यायाः गुणातिरिक्तत्वं वक्तव्यमिति पूर्वपक्षिणामाशयः । तत्र च साक्षात्संसर्गेणैव सङ्ख्यायाः गुणसद्भावो वक्तव्यः नतु सामानाधिकरण्यात्मकैकार्थसमवायसम्बन्धेन । तथा सति द्रव्ये यथा गुणस्य चतुर्विंशतिसङ्ख्यायाश्च सामानाधिकरण्यसम्बन्धेन वृत्तित्वमिष्यते तथा शतसंख्याया अपि निरुक्तरीत्या सामानाधिकरण्यसम्बन्धसम्भवेन 'चतुर्विंशतिरेव गुणाः'इति नियमो नोपपद्यते । किञ्च कुसुम्भे साक्षात्सम्बन्धेन रक्तगुणो वर्तते तद्रक्तपटे तु स्वसमवायसमवायिसंयोगरूपपरम्परासम्बन्धेनेति सर्वैरपि विदितम् । एवच्च तत्र संसर्गस्य विलक्षणत्वेऽपि रक्तत्वप्रतीतिस्तुल्यैव जायत इति तद्वदेव प्रकृतेऽपि संसर्गस्य विलक्षणत्वेऽपि प्रतीतेरवैलक्षण्ये न किञ्चिद्बाधकमिति भावः ।

एवं एकार्थसमवायरूपपरम्परासम्बन्धस्य 'चतुर्विंशतिर्गुणाः' इत्यत्र संसर्गत्वोपगमे तादृशसम्बन्धस्य शतसङ्ख्यायामपि सत्वेन 'शतं गुणाः' इत्यपि प्रतीत्यापत्तिः ।

तस्मादत्र साक्षात्संसर्ग एव प्रकृते विवक्षितः गुणे च सङ्ख्याप्रतीतेरनपायतया सङ्ख्याया पदार्थान्तरत्वसिद्धिर्निष्प्रत्यूहेति निष्कर्षः ।

एकार्थसमवेतसमवायात्तथेति चेत्–न; पूर्वदोषादननुगमाच्च । गुणे गुणाङ्गीकारेऽनवस्थेति चेत्, अत एव गुणत्वमस्या मास्तु । न च सापि, यावदनुभवं निमित्तानुसरणात् कर्मादौ सत्त्वाच्च । तस्मात्पदार्थान्तरमेव सङ्ख्या । उक्तञ्चैतच्छिरोमणिनापि–'सङ्ख्या च पदार्थान्तरं न गुणः' इत्यादिना । तदुक्तम्—

'न द्रव्यं गुणवृत्तित्वाद् गुणकर्मबहिष्कृता ।
सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि सा' ।।

इति । प्राभाकरा अप्येवमाहुः । तत्कथं पञ्चैव पदार्थाः ?

## सङ्ख्यायाः पदार्थान्तरत्वनिरसनम्

उच्यते—अनवस्थापत्तेरेव सङ्ख्या गुणः । द्रव्यगतङ्ख्यया प्रतीतौ गुणकर्मादिषु तद्भावाच्च । न च वैपरीत्यम्, उपजीव्यत्वेन प्राथम्याल्लाघवाच्च द्रव्यस्यैव तदाश्रयत्वात् । न च त्रीणि सहस्राणि इत्यनुपपत्तिः, अपेक्षाबुद्धेरभिव्यञ्जकत्वेन सहस्राश्रये त्रित्वस्य सत्त्वात् । न च शतधीप्रसङ्गः, प्रतीतौ निमित्तमात्रानुसारात् । यत्र तादृश्यपेक्षास्ति तत्रास्त्येव शतं सहस्राणीति धीरिति दिक् ।

## सादृश्यं न पदार्थान्तरम्

सादृश्यमपि पदार्थान्तरमिति केचित् । तन्न; तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वस्यैव तत्त्वात् ।

## शिरोमणिमतेन स्वत्वस्य पदार्थान्तरत्वम्

शिरोमणिभट्टाचार्यास्त्वाहुः–स्वत्वमपि पदार्थान्तरमस्ति । तथाहि—[1]चैत्रस्येदं धनमिति धनवृत्तिश्चैत्रसम्बन्धः प्रतीयते । स च स्वत्वम् । न च यथेष्टविनियोगयोग्यत्वं तत्, विनियोगो हि न भक्षणादिकम्, परकीये तत्सम्भवात् । न च शास्त्रानिषिद्धं भक्षणादिकं विनियोगः । 'परस्वं नाददीत' इत्यादिशास्त्रस्य हि स्वत्वाप्रतीतौ कथं प्रवृत्तिः ? ततश्च [2]परस्पराश्रयः । किञ्च योग्यत्वं नाम न धनस्वरूपम्, तस्य क्रयविक्रयादेः प्रागूर्ध्वञ्च सत्त्वात् । न तद्धर्मः,इष्टापत्तेः । तस्माद्भिन्नमेव स्वत्त्वम् । तत्र च 'परस्वं नाददीत' इति शास्त्रमेव मानम् ।

---

१. अत्रायं भावः । चैत्रस्येदं धनमित्यत्र नैयायिकमते इदमर्थाभिन्नं धनं स्वत्वसम्बन्धेन चैत्रवत् इति शाब्दबोधः । तत्र च धनचैत्रयोः संसर्गतया प्रतीयमानं स्वत्वं क्लृप्तपदार्थातिरिक्तमित्याशयः ।

यथेष्टविनियोगयोग्यत्वस्य स्वत्वपदवाच्यत्वे अन्यदीयस्वत्वेऽपि भक्षणरूपो यो यथेष्ट विनियोगः तद्योग्यत्त्वस्य सत्वादतिव्याप्तिः यदि च परस्वं नाददीत इति शास्त्रानिषिद्ध यथेष्टविनियोगयोग्यत्वस्य स्वत्वपदार्थत्वे तदा अन्योन्याश्रयदोषः तस्मादत्रातिरिक्तमेव स्वत्वमिति निगूढाभिसन्धिः ।

१. स्वत्वपदार्थावगतौ सत्यां 'परस्वं नाददीत' इति शास्त्रप्रवृत्तिः, प्रवृत्ते च शास्त्रे स्वत्व पदार्थावगतिरित्यन्योन्याश्रयः ।

तच्च प्रतिग्रहक्रयपित्रादिमरणैर्जन्यते । दानविक्रयाद्यैश्च नाश्यते । कथं तर्हि पितृजीवने तद्धने पुत्रस्य स्वत्वम् ? शास्त्रादेव । तस्याप्रतिबन्धदायत्वात् ।

'स्वामी रिक्थक्रयसविभागपरिग्रहाधिगमेषु' इति गौतमोक्तेः । कथं तर्हि स्वस्य सतो विभागः ? लौकिकं हि स्वत्वमिति **विज्ञानेश्वरादयः** । नैवम्, तस्य युक्तिविरोधेन हेयत्वात् । यद्वास्तु लौकिकं तथापि पदार्थान्तरमेवेति । कथमननुगतानां प्रतिग्रहादीनां स्वत्वं प्रति विक्रयादीनां तन्नाशं प्रति कारणत्वमिति चेत्–न, स्वत्वत्वावच्छिन्नं प्रति प्रतिग्रहादीनां तन्नाशत्वावच्छिन्नं प्रति विक्रयादीनाञ्चैकशक्तिमत्वेन तृणादीनामिव वन्हौ कारणत्वात् । नाशे जातेरभावेऽप्यखण्डोपाधयः कार्यतावच्छेदकाः, नानावैजात्यापेक्षयैकशक्तेरेव लघुत्वात् ।

## स्वत्वस्यानतिरिक्तत्वम्

अत्राहुः—नातिरिक्तं स्वत्वं कल्पते, गौरवान्नानाभावाच्च । किं तर्हि स्वत्वमिति चेत्–परमते स्वत्वस्य यानि नाशकानि विक्रयादीनि तेषां प्रागभावविशिष्टाः स्वत्वोत्पादकाः क्रयप्रतिग्रहादिध्वंसाः तद्ध्वंसविशिष्टा वा विक्रयदानप्रागभावाः स्वत्वम् । आद्यमादाय स्वत्वोत्पत्तिः, द्वितीयमादाय नष्टमिति च व्यवहारः, भिन्ने स्वत्वे स्वत्वत्वमपि भिन्नमुपेयम्, तद्वरं क्लृप्तेषु ध्वंसेषु स्वत्वमेव कल्पितमिति ।

## स्वत्वे स्वमतम्

तदेतत् पित्र्यपितामहधने पुत्रस्य स्वत्वेऽव्याप्तम्, विनिगमनाविरहादननुगमग्रस्तम्, नानाध्वंसानां स्वत्वकल्पनापेक्षया भिन्नस्वत्वस्यैव लघुत्वादधिकरणभिन्नाभावसमवायसाधनेन गलहस्तितञ्च । अस्तु यथा तथा । तथाप्यतिक्षाल्यमानं [1]स्वत्वं शक्तिकुक्षिनिक्षिप्तमेव, कथमन्यथा स्वत्वत्यागपरस्वत्वापत्यादिकं सम्भवेदिति दिक् ।

## वैशिष्ट्यस्य पदार्थान्तरत्वशङ्का

ननु वैशिष्ट्यमपि पदार्थान्तरमस्ति । तथाहि–यथा रूपवानिति प्रत्यक्ष-

---

१. शक्तिकुक्षिनिक्षिप्तमेवेति । अत्रेदमनुसन्धेयम् । सहजशक्तिः आधेयशक्तिः पदशक्तिश्चेति शक्तेस्त्रैविध्यमुपपादितम् शक्तिवादे । तेषु स्वत्वस्य सहजशक्तावन्तर्भावसम्भवान्नातिरिक्तत्वमिति । तथाहि 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इत्यनेन सम्प्रदान शब्दार्थः प्रतिपादितः । तत्र च दानशब्देन स्वस्वत्वत्यागपूर्वकपरस्वत्वापादनमुच्यत इति ईदृशस्वत्वस्य विक्रयादिप्रागभावविशिष्टक्रयप्रतिग्रहादिध्वंसरूपत्वमनुपपन्नमिति वन्ह्यादौ दाहानुकूलशक्तिवत् धनादौ क्रयप्रतिग्रहयोग्यत्वरूपा या शक्तिः सैव स्वत्वशब्दवाच्येति नात्र स्वत्वस्य अतिरिक्तत्वं सिद्धयतीति ग्रन्थकर्तुराशयः ।
एवञ्चैतत्सिद्धं यत् विक्रयादिप्रागभावविशिष्टक्रयप्रतिग्रहादिध्वंसस्य धननिष्ठक्रय प्रतिग्रहयोग्यत्वरूपसहजशक्त्यतिरिक्तस्य वा न स्वत्वरूपत्वं अपितु धनादिनिष्ठ क्रयप्रतिग्रहयोग्यत्वात्मिका शक्तिरेव स्वत्वमिति ।

विषयतया समवायः सिध्यति, तथाभाववद्भूतलमिति प्रतीतिविषयतया वैशिष्टच-सिद्धिः। अभावविशिष्टधीः सम्बद्धविशेषणविशेष्यविषया, यथार्थविशिष्टज्ञान-त्वात्, नीलविशिष्टधीवत्। यथा च रूपप्रत्यक्षे संयुक्तसमवायो हेतुस्तथाभावे चक्षुस्संयुक्तवैशिष्टचमेव हेतुः, न तु स्वरूपसम्बन्धः। न च वैशिष्टचप्रत्यक्षे स्वरूपसम्बन्धस्यावश्यकत्वादभावेऽपि स एवेति वाच्यम्, समवायोच्छेदापत्तेः। तत्रापि स्वरूपसम्बन्धसम्भवात्। न चैष्टापत्तिः, अत्रास्य समवाय इत्यनुभव-सिद्धत्वात्। रूपवान् अभाववान् इति सम्बन्धांशे वैलक्षण्याननुभवात् [1]कारण-त्रितयभेदानुपपत्तेश्च। समवायिकारणादीनां समवायधर्मत्वात्। तदभावे च समवायिकारणनाशात्कार्यनाश इत्यादि विप्लवापत्तेः।

---

१. कारणत्रितयभेदानुपपत्तेरिति। रूपवान्घट इत्यत्र रूपस्य घटस्य च यदि स्वरूपमेव सम्बन्धः न तु तदतिरिक्तः कश्चित्समवायः इत्युच्येत तदा समवायिकारणासमवायि-कारणनिमित्तकारणभेदेन कारणस्य त्रेधा भेदानुपपत्तिः। समवायस्य कपालादि रूपसमवायिकारणधर्मत्वेन समवायानभ्युपगमे निरूक्तरीत्या कारणभेदो दुर्वच इत्याशयः। अनयैव रीत्या घटाभाववद्भूतलमित्यत्रापि भूतलस्य घटाभावस्य च विशेषणादिस्वरूपापेक्षया वैशिष्टचमेव कश्चन सम्बन्धोऽतिरिक्ततया प्रतीयत इति वैशिष्टचरूपसम्बन्धस्य पदार्थान्तरत्वासिद्धिः।

न च विशेषणविशेष्यतत्सम्बन्धात्मकमेव विशिष्टपदवाच्यम् अथवा विशेषणो-परक्तं विशेष्यमेव वा विशिष्टपदवाच्यमिति नात्र विशेषणादिस्वरूपापेक्षया वैशिष्टच-स्य भिन्नत्वसिद्धिरिति वाच्यम्। तथा सति 'घटाभावः भूतलं तत्संसर्गश्च' इति समूहालम्बनज्ञानेऽपि विशेषणविशेष्यतत्सम्बन्धस्य विशकलिततया भानात् तत्रापि विशिष्टधीव्यवहारापत्तिस्स्यात्। तस्मादत्र विशेषणविशेष्यतत्सम्बन्धापेक्षया अतिरिक्तमेव विशिष्टपदवाच्यम्। एवं विशेषणोपरक्तं विशेष्यमेव विशिष्टपदवाच्य-मिति पक्षोऽपि न युज्यते। विशेषणत्वस्य भासमानवैशिष्टचप्रतियोगित्वरूपत्वेन वैशिष्टचपदार्थज्ञानसत्वे एव विशेषणत्वज्ञानं भवति। विशेषणज्ञाने सत्येव विशेषणो-परक्तविशेष्यरूपविशिष्टज्ञानं सम्भवतीति अन्योन्याश्रयदोषः स्यादिति विशेषणोपर-क्तविशेष्यापेक्षया अतिरिक्तमेव वैशिष्टचं तादृशस्यैव वैशिष्टचस्य 'घटाभाववद्भू-तलमित्यादौ संसर्गतया प्रतीतिविषयत्वमिति पूर्वपक्षिणामाशयः। सिद्धान्तस्तु 'अभाववद्भूतल' मित्यादौ विशेषणविशेष्यतत्सम्बन्धस्यैव प्रतीतेः वैशिष्टचस्याति-क्तत्वे प्रमाणाभावान्नात्र वैशिष्टचस्य घटाभावभूतलसंसर्गत्वं किन्तु स्वरूपसम्बन्ध एव तत्र अङ्गीक्रियते इति। यदुक्तमन्योन्याश्रयदोषापत्या विशेषणत्वस्यैव निर्वचना-सम्भवेन विशेषणोपरक्तविशेष्यरूपत्वं न विशिष्टस्य सम्भवतीति, तत्र वदामः। न केवलमत्र भासमानवैशिष्टचप्रतियोगित्वमात्रं विशेषणत्वं अपितु कार्यान्वयिविशेष्य-भेदकत्वे सति कार्यानन्वयित्वमपि। ईदृशस्य विशेषणत्वस्य विशिष्टज्ञानपूर्वकत्व-प्रयुक्तः अन्योन्याश्रयदोषः न शक्यसम्भव इति विशेषणोपरक्तविशेष्यत्वस्य विशिष्ट-शब्दवाच्यत्वं निराबाधमिति नात्र वैशिष्टचस्य पदार्थान्तरत्वसिद्धिरिति भावः।

ननु वैशिष्टचम् एकं वा नाना वा ? नाद्यः; घटवत्यपि तदभावधीप्रसङ्गात्। पटाभाववैशिष्ट्याभेदात् । नान्त्यः, पूर्वं घटशून्ये घटानयनेऽपि तदभावापत्तेः, तद्वै शिष्टचस्य तत्र सत्त्वात् । अथ तत्कालावच्छिन्नं वैशिष्टचं तद्देशे नास्तीति चेत्– न; तत्कालावच्छिन्नदेशस्यैव तथात्वे किं तेन ? न च रक्तघटे श्यामधीप्रसङ्गः (तु?), समवायेऽप्येतत्तुल्यम्, श्यामसमवायस्य नाशात् । क्वचित्समवाये उत्पादविनाश-वत्वेऽप्यक्षतेः । एतेन विशिष्टं (वैशिष्टचं) व्याख्यातम् । उच्यते–वैशिष्टचमपि समवायवदेकं नाना वास्तु । तत्रापि वायौ रूपवत्तन्निरूपितत्वाभावान्नानात्वे तद्विनाशाच्च नोक्तदोषः । उक्तञ्चैतच्छिरोमणिनापि ।

ननु समवायानङ्गीकारे कथं विशिष्टसिद्धिः ? इत्थम्—न तावद्विशेषणविशेष्यतत्सम्बन्धात्मकं तत्, तत्समूहालम्बनेऽति प्रसङ्गात् । नापि विशेषणोपरक्तं विशेष्यमेव विशिष्टम्, विशेषणानिर्वचनात् । न हि क्रियान्वयित्वं तत्त्वम्. विशेष्ये तदविशेषात्, क्रियायामभावाच्च । नापि भासमानवैशिष्टचप्रति-योगित्वम्, अन्योन्याश्रयात् । विशिष्टप्रतीतौ तद्धीः, विशेषणप्रतीत्या च विशि-ष्टधीरिति । उपलक्षणेऽतिप्रसङ्गाच्च - न ह्युपलक्षणं (न ?) भासमानवैशिष्टच-प्रतियोगि । कश्च तस्योपरागः ? न तावत्स्वरूपं सम्बन्धो वा, समूहालम्बने तद-विशेषात् । तस्माद्विशिष्टमतिरिक्तम् । तदाहुर्भट्टपादाः–'विशिष्टविधौ सर्वं पारार्थ्यम्' इति । अत्र 'विशिष्टस्यातिरिक्तत्वाद्विशेषणविशेष्यादिपदानां तत्समर्प-कत्वात्पारार्थ्यम्' इति भट्टसोमेश्वरः । अतः कथं पञ्चैव पदार्थाः ?

## वैशिष्टयस्य पदार्थान्तरत्वनिरसनम

अत्र ब्रूमः–सत्यं तन्मतेऽतिरिक्तं विशिष्टम् । स्वतन्त्रास्तु न मन्यन्ते, तत्र मानाभावात् । ननु दण्डीत्यत्र न दण्डस्वरूपकृतं तस्य विशेषणत्वम्, समूहालम्बने तत्सत्वात् । वैशिष्टचप्रतियोगित्वभानकृतं चेत्–सत्यम् तदेवात्र कुतः ? समूहा-लम्बने च कुतो नेति वक्तव्यम् । तेन यत्कृतं विशेषणत्वं तदुन्नीयत इति चेत्–न; क्लृप्तेनोपपत्तेः वैपरीत्यस्य सुवचत्वाच्च । समूहालम्बनमपि न दण्डस्वरूपकृतम्, अपरकोटिभानसामग्रीकृतं वा ? विशिष्टे तत्सत्वात् । तेन यत्कृतं समूहालम्बनं जायते तत्कल्प्यत इति तदप्यर्थान्तरं स्यात् । तस्माद्विशेषणोपरक्तं विशेष्यमेव विशिष्टम् । विशेषणत्वञ्च भासमानवैशिष्टचप्रतियोगित्वं कार्यान्वयिभेदकत्वं कार्यानन्वयिरूपञ्च । इदं विशिष्टविधावेव । यत्र त्वग्निहोत्रादौ धात्वर्थविशिष्ट-क्रियाविधिस्तत्र विशिष्टविधिव्यवहाराभावान्नेदम् । न चोपलक्षणादभेदः, इष्टा-पत्तेः । उपलक्षणं हि विशेषणविशेष एव सद्भेदकं विशेषणम् । असच्चोपलक्षण-मिति । भेदकत्वन्तूभयोस्समम् । एतच्च **तन्त्ररत्ने नवमेऽध्याये** स्पष्टम् ।

## उपाधेः पदार्थान्तरत्वशङ्का तन्निरसनञ्च

केचित्तूपाधिमपि तृतीयं प्रकारमाहुः—यथा रक्तः स्फटिक इति । तदु-

क्तम्–'कार्यान्वयित्वेन विभेदकं यद्विशेषणं नैल्यमिवोत्पलस्य । अनन्वयित्वेन च भेदकानामुपाधिता लक्षणता च सिद्धा' इति । तन्न; विशेषणेऽन्तर्भावात् । तस्मात् क्रियान्वयानन्वयकृते एव समूहालम्बनविशिष्टज्ञाने इति न पदार्थान्तरम्। एतेन 'सोमेन यजेत' इति विशिष्टविधौ विशेषणविधिकल्पनमप्रत्यूहमूहेत, सोमस्य श्रुतविध्यन्वये समूहालम्बनापत्त्या विशेषणत्वभङ्गापत्त्या तद्विधिकल्पनात् । यागेऽपूर्वविधिः सोमे नियम इति विधिवैरूप्यापत्तेश्च । अस्तु वार्थान्तरम्, तथापि शक्तिकोटिनिक्षिप्तमेवेति दिक् ।

## ज्ञाततायाः पदार्थान्तरत्वशङ्का तन्निरासश्च

केचिदाहुः–ज्ञाततापि पदार्थान्तरमिति । अन्यथा प्रत्यक्षेण [1]ज्ञातोऽयमिति ज्ञानज्ञेययोर्विशिष्टावगमो न स्यात् । सम्बन्धं विना तदयोगात् । अन्यथा समवायाभावापत्तेः । कथञ्च ज्ञानसिद्धिः ? ज्ञानस्यातीन्द्रियत्वात् । [2]ज्ञातता ज्ञानजन्या

---

१. ज्ञातोऽयमिति । ज्ञातोऽयं घटः इति प्रत्यक्षं सर्वेषामेव जायत इत्यविवादम् । तत्र च ज्ञात इत्यस्य ज्ञानविशिष्ट इत्यर्थः । तथा च ज्ञानविशिष्टो घट इति वाक्यार्थस्सम्पन्नः । एवञ्च ज्ञेये घटे ज्ञानवैशिष्ट्यस्य भानात् ज्ञानज्ञेयवैशिष्ट्यात्मकतया ज्ञातता सिद्ध्यतीत्याशयः ।

२. ज्ञाततेति । अत्र ज्ञाततेति पक्षनिर्देशः ज्ञानजन्येति साध्यनिर्देशः ज्ञाततात्वादिति हेतुनिर्देशश्च विवक्षितः । तथाच 'ज्ञातो घटः' इति प्रत्यक्षेण ज्ञातता ऽवश्यमभ्युपगन्तव्या अन्यथा ज्ञाततात्वस्यैव प्रकृते हेतुत्वेन तस्य ज्ञाततारूपाश्रयासिद्ध्या नात्र ज्ञाततात्वलिङ्गकानुमित्या ज्ञानसिद्धिर्वक्तुं शक्यत इति भावः । अत्रेदं चिन्त्यते । ज्ञाततापक्षकप्रकृतानुमितौ पक्षतावच्छेदकहेत्वोरैक्यात् कथमत्रोक्तानुमित्या ज्ञानसिद्धिर्घटते कथन्तरां ग्रन्थकृदुक्तानुमितेः प्रामाणिकत्वम् इति । तथाहि–ज्ञाततात्वमत्र हेतुः ज्ञातता च पक्षः । तत्र च पक्षे यद्विशेषणं तदेव पक्षतावच्छेदकमित्युच्यते । एवञ्च ज्ञाततारूपपक्षे ज्ञाततात्वस्यैव विशेषणत्वेन तस्यैव च पक्षतावच्छेदकत्वमिति पक्षतावच्छेदकहेत्वोरैक्यापत्तिः । पक्षतावच्छेदकहेत्वोरैक्ये सति को दोष इति चेत् सिद्धसाधनमेव । सर्वत्रानुमितिसामान्ये साध्यस्य पक्षवृत्तित्वज्ञानमेवानुमितेः प्रयोजनमिति सर्वैरप्यङ्गीकृतम् । तत्र चानुमितेः पूर्वं हेतोः सामान्यतः साध्यसामानाधिकरण्यात्मकं व्याप्तिज्ञानमावश्यकम् अन्यथा अनुमित्यनुपपत्तेः । तथाच व्याप्तिज्ञानेन पक्षे तदितरस्थले च हेतोः साध्यसामानाधिकरण्यं सामान्यतो वर्तते इत्यविवादम् अनुमित्या तु साध्यस्य पक्षवृत्तित्वमात्रं ज्ञाप्यत इति स्वरूपस्थितिः । तदिह ज्ञाततात्वस्य हेतुत्वे तस्यैव च पक्षतावच्छेदकतया साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानदशायामेव पक्षतावच्छेदकीभूतहेतुसामानाधिकरण्यस्याऽपि सत्त्वात् अनुमितेः प्रागेव साध्यस्य पक्षवृत्तित्वलाभेन सिद्धसाधनात्मको दोषस्स्यात्-साध्यसिद्धिसत्त्वे च तस्याः अनुमितिप्रतिप्रतिबन्धकत्वेनानुमितिरेव न स्यात् । इत्थञ्च ज्ञाततापक्षक ज्ञाततात्वलिङ्गकानुमित्या ज्ञानं सिद्ध्यतीति ग्रन्थकृता यत्प्रतिपादितं तत्कथं सञ्जाघटीति ।

ज्ञातताश्रयत्वादिति हि ज्ञानसिद्धिः न ज्ञाततां विना घटते, आश्रयासिद्धेः। किञ्च–घटस्य ज्ञानजननेन विषयत्वम्, इन्द्रियादौ तदापत्तेः वन्ह्यादावविषयतापत्तेश्च। अनुमितेर्विषयाजन्यत्वात्। तेन ज्ञानजनितज्ञातताश्रयत्वाद्घट एव ज्ञानविषयो नान्यः। ज्ञातताभावे विषयनियमो न स्यात्। ननु स्वरूपेणैव विषयत्वमस्तु, किं ज्ञाततया? न च ज्ञातोऽयमिति प्रत्यक्षं तत्र मानम्, ज्ञानविषयत्वं हि तत्र भासते न ज्ञातता। ज्ञानञ्च सुखादिवन्मानसमेव, न त्वतीन्द्रियम्। अन्यथा ज्ञाततायाः ज्ञानविषयत्वाद् ज्ञाततान्तरापत्त्या चानवस्था स्यात्। तत्र स्वभावाद्विषयत्वं घटेऽपि तथास्तु। किञ्चातीतानागतयोः ज्ञातताभावे कथं विषयत्वम्? स्वरूपेणेति चेत्—अन्यत्रापि तथास्तु। अतीतानागतदिवसघटादौ सङ्ख्यावदतीतादौ-ज्ञातताऽस्त्येवेति महेन्द्राधिकरणे 'अपि वा श्रुतिसंयोगात्' इत्यत्र **राणकः**। न च तत्र घटत्वनिष्ठा ज्ञातता, घटे विषयत्वायोगात्। न च तत्र ज्ञातताश्रयाश्रयत्वेन विषयत्वम्, घटज्ञाततया घटतलवर्त्यसन्निकृष्टपदार्थानां विषयत्वापत्तेः। किञ्च गुणादौ कथं ज्ञातता? द्रव्यभिन्नस्य समवायिकारणत्वाभावात्। किञ्च द्विष्टः कृत इष्ट इति प्रतीतेर्द्विष्टतादिकमपि पदार्थान्तरं स्यात्। विषयनिष्ठं प्राकट्यं ज्ञाततेति वेदान्तिनोऽप्याहुः। तदपि चिन्त्यमिति चेत्–सत्यम्, नव्यमत एवम्, जीर्णास्त्वङ्गीकुर्वन्ति। तेषामाशयं न विद्मः।

केचित्त्वाहुः—ज्ञानादिविषयताप्यर्थान्तरम्, ज्ञानज्ञेययोस्सम्बन्धाभावात्। न तावत्स्वरूपं सम्बन्धः, तस्य प्रत्येकनिष्ठत्वान्निरस्तत्वादतीतानागतयोर्विषयत्वायोगाच्च। न च ज्ञानस्वरूपमेव तत्र सम्बन्धः, तस्य सर्वसाधारणत्वेन युगपत्सर्वविषयज्ञानापत्तेः। न चेन्द्रियार्थसन्निकर्षो नियामकः, अतीतादौ तदभावात्। तेन ज्ञानजनितज्ञातताधारत्वेन विषयतेति परास्तम्। तस्मादतिरिक्तम्। एवं कारणत्व-कार्यत्व–प्रतियोगित्वानुयोगित्वाधारत्वाधेयत्व-विशेषणत्व–विशेष्यत्वानुयोगित्वाधारत्वावच्छेदकत्वादयोऽप्यर्थान्तराणीति **शिरोमण्यादयोऽप्येवमाहुः**। अन्ये तु सम्बन्धांशे विलक्षणप्रत्ययादिकमपलपन्तः सर्वमेव समवायादिकमतिरिक्तं न मन्यन्ते। सन्तु वा तादात्म्यशक्तिकुक्षिदरीनिक्षिप्तान्येवैतानीति सङ्क्षेपः।

## ज्ञानकर्मसमुच्चयविचारः

ननु ज्ञानस्य कर्मणा कथं समुच्चयः? स हि समप्राधान्येन? अङ्गाङ्गि

---

अत्र प्रतिविधीयते। ज्ञानस्य समानविषयकत्वेन प्रतिबन्धकत्वमिति प्राचीनाः। समानप्रकारकत्वेनैव प्रतिबध्यप्रतिबन्धकभाव इति नवीनाः। तदिह पक्षस्साध्यवान् इत्याकारकानुमितेः 'साध्यसमानाधिकरणो हेतुः' 'हेतुसमानाधिकरणं साध्य' मिति वा ज्ञानद्वयापेक्षया भिन्नत्वेन समानप्रकारकत्वाभावेन नात्र निरुक्तरीत्या सिद्धसाधनसत्वेऽपि अनुमित्यनुपपत्तिर्वक्तुं शक्यते अनुमितिं प्रति निरुक्तज्ञानयोरप्रतिबन्धकत्वेन सिद्धसाधनस्य प्रकृतेऽकिञ्चित्करत्वात्। तस्मादत्र ज्ञाततापक्षकानुमित्या ज्ञानसिद्धिः निराबाधैवेति ग्रन्थकृतां निगूढाभिसन्धिः।

भावेन वा ? नाद्यः, तेषां स्ववाक्येन फलवत्त्वादन्यार्थत्वविरोधात् । मिथ्याज्ञानध्वंसरूपे व्यापारे तत्त्वज्ञानस्य कर्मानपेक्षत्वात्, दर्शपूर्णमासवत्साहित्याश्रवणाच्च । नान्त्यः, सोऽपि सन्निपत्योपकारकत्वेन ? आरादुपकारकत्वेन वा ? नाद्यः, कर्मणामप्रमाणत्वेन तत्त्वज्ञानस्वरूपाजनकत्वात् । नान्त्यः, फलवत्सन्निधावफलत्वाभावात् ।

किञ्च समुच्चयः किं नित्येन ? नैमित्तिकेन ? काम्येन? तत्तदाश्रमविहितेन वा कर्मणा स्यात् ? नाद्यः !

'वेदादिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेत्'
नित्यं कर्म परित्यज्य गूढो भूत्वा चरेन्मुनिः ।
कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।।
यज्ञं यज्ञोपवीतञ्च त्यक्त्वा गूढश्चरेन्मुनिः' ।

इत्यादिश्रुतिस्मृतिवृन्दैस्तत्त्यागश्रवणात् । एतेन द्वितीयतृतीयौ परास्तौ । नापि चतुर्थाश्रमविहितकर्मणा, तदभावेऽपि गृहस्थस्य ज्ञाने सति मुक्तिश्रवणात् ।

'न्यायागतधनः तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते' ।।

इति । नापि तत्तदाश्रमविहितेन कर्मणा, अननुगमात् ।

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ।
'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' ।

'एतावदरे खल्वमृतत्वम् एतावदात्मसाक्षात्काररूपं ज्ञानम्' अमृतत्वम् अमृतत्वसाधनमित्यर्थः । लाङ्गलं जीवनमितिवत् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिश्रुतिस्मृतिभिस्तन्निषेधाच्च ब्रह्मात्म्यैक्यरूपेऽविद्यानिवृतिरूपे दुःखाभावरूपे वा मोक्षे कर्मनिरपेक्षत्वाच्च । न ह्यात्म्यैक्यरूयेऽविद्यानिवृत्तिरूपें दुःखाभावरूपे वा मोक्षे कर्मानपेक्षणाच्च । न च 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्रह्मणस्सायुज्यं सलोकताञ्च गच्छति' इनि स्मृत्या कर्मणां मोक्षहेतुत्वमिति वाच्यम्, ज्ञानद्वारेणापि तस्योपपत्तेः । तथा च गीतासु भगवान्

'स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः' इत्युपक्रम्य,
'सिद्धि प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे' इति चोक्त्वा,

'बुध्या विशुद्धया युक्तो वृत्यात्मानं नियम्य च ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' ।। गी० १८-५५

इति चित्तशुद्धिजन्यज्ञानद्वारैव मोक्षहेतुतामाह ।

किञ्च मिथ्याज्ञानध्वंसान्मुक्तिस्सर्वसम्मता । न च कर्मसहस्रेणापि मिथ्याज्ञाननिवृत्तिः क्वापि दृष्टचरी । तत्त्वज्ञानात्तन्निवृत्तिस्तु 'इदं रजतम्' 'नेदं रजतम्' इत्यादौ सर्वत्र दृष्टेति तत्त्वज्ञानस्यैव हेतुत्व युक्तम् । ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन

चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति' इति वाजसनेयेऽपि पाठे 'यज्ञेन दानेन तपसानाशकेन' इति काण्वपाठे च बृहदारण्यकश्रुतौ 'तमेतम्' इति द्वितीयाश्रुत्या पूर्वप्रकृतप्रत्यगभिन्नब्रह्मरूपं मोक्षमुद्दिश्य तादर्थ्येन कर्माणि विधीयन्ते। अन्यथा इष्टतावच्छेदकप्रकारकज्ञानेनान्यथासिद्धायां वेदनेच्छायां प्रमाणेनान्यथासिद्धे तद्विषयवेदने वोपयोगाभावेन कर्मणां विधानायोगात्। इदं वाक्यञ्चानर्थकमापाद्यम् इति चेत्-न; ज्ञानमात्रसाध्ये मोक्षेऽप्युपयोगाभावेन तदुद्देशेनापि विधानायोगात्। न च 'तमेतम्' इति द्वितीयाश्रुत्या मोक्षस्य साध्यत्वम्, वेदनविषयमात्रार्थत्वाद्वेदनस्य च 'तमेव विदित्वातिमृत्युमेति' इति मोक्षार्थत्वात्। तस्मात्तत्त्वज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारा विविदिषाया योग्यत्वाद् 'राजपुरुषमानय' इतिवदर्थतो ज्ञानप्राधान्येऽपि शब्दतः प्रत्ययार्थत्वेन भावनायास्साध्याकाङ्क्षायाः प्राथम्येनैकप्रत्ययोपात्तेनेच्छायाः साध्यत्वेन प्राधान्याच्च तादर्थ्येनैव कर्मणां [1]संयोगपृथक्त्वन्यायेन विधानम्। यद्यप्यश्वेन जिगमिषतीत्यश्वस्य गमनान्वयवदिष्यमाणज्ञानार्थत्वमेव न त्विच्छार्थत्वमिति विवरणाचार्यैरुक्तम्, तथापि तत्र बाधात्तथा, न त्वत्र बाधोऽस्तीति दूरस्थसर्वेवात्वर्थविशिष्टं भावनान्तरम् 'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः' इति वार्त्तिकरीत्या विधीयते। अन्यथा नाना कारकविधौ वाक्यभेदात्। न चैकस्यां नाना करणसम्भवः, दर्शराजसूयादिवत् कारकाक्षिप्तनाना भावनासमुदायस्य फलैक्यात्। तेनेच्छार्थत्वमेव यज्ञादीनां न तु ज्ञानार्थत्वमिति वाचस्पतिमिश्राः। तस्मात् कर्मणां चित्तशुध्यर्थत्वमेव। तथा च श्रुतिः-'धर्मेण पापमपनुदति' तथा 'इदमनेनाङ्गं संस्क्रियते'। तथा स्मृतिरपि-

'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये'।

मनुरपि-

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः'॥

ब्राह्मी ब्रह्माभिव्यक्तियोग्या। गीतास्वपि-

'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति।

कषाये-रागद्वेषौ। पक्वे-नष्टे। तस्मात्कर्मणां ज्ञानार्थत्वं न तु मोक्षार्थत्वमिति।

ननु विविदिषावाक्येन कर्मणां ज्ञानार्थत्वे कर्मसंन्यासस्य कथं ज्ञानाङ्गत्वम्? आत्मज्ञानप्रकरणे हि संन्यासो विहितः-'संन्यस्य श्रवणं कुर्यात्' 'एतं वै लोकमीप्सन्तः प्रव्रजन्ति' इति वाक्यादङ्गत्वाच्च। अत्र विवरणे त्रिधा परिहार उक्तः-

---

१. पू० मी० ४-३-३ दधिरूपगुणस्य 'दध्ना जुहोती'ति क्रत्वर्थतया 'दध्नेन्द्रियकामस्य जुहुयात् इति पुरुषार्थतया च शेषिभेदेन (पृथक्) विनियोगात् उभयार्थत्वं यथा, तथा प्रकृते कर्मणोऽपि विविदिषार्थत्वेन प्रत्यवापरिहारार्थत्वेन च विधानं सम्भवतीत्याशयः।

षोडशिग्रहणाग्रहणवत् कर्मतत्त्यागयोर्विकल्पः, क्रमेण वा कर्मतत्त्यागयोर्ज्ञानार्थत्वात्समुच्चयः, ब्राह्मणक्षत्रियादिविषयत्वेन वा व्यवस्थेति । **नृसिंहाश्रमास्तु**–सन्न्यासस्य ज्ञानेन समप्राधान्यान्मोक्षार्थत्वमाहुः । किञ्च न कर्मणां मोक्षहेतुत्वं युक्तम्, तदभावेऽपि ब्रह्मचर्यादीनां सन्न्यासे सति मुक्तेः । तथाच जाबालश्रुतिः–'ब्रह्मचर्याद् गृहाद् वनाद्वा प्रव्रजेत्' इति । जन्मान्तरीयस्य च कर्मणो हेतुत्वे समुच्चयासम्भवात् । न च कर्मानधिकृतान्धपङ्ग्वादिविषयः सन्न्यास इति वाच्यम्, 'गृहात्' इति कर्माधिकारिणोऽपि तच्छ्रवणात् । किञ्च यत्किञ्चित्कर्मानधिकारो वा यावत्कर्मानधिकारो वा ? नाद्यः, ब्राह्मणस्यापि तदनापत्तेः । नान्त्यः, अन्धादीनामपि सन्ध्यावन्दनादिसत्त्वेन सन्न्यासो न स्यात् । 'अथ पुनर्व्रती वाव्रती वा स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति कर्मानधिकारिणं गृहस्थादिभ्यः पृथगुपादानाच्च । किञ्च कर्मणां मोक्षहेतुत्वे कथं तदुपायत्वेन 'संन्यस्य श्रवणं कुर्यात्' इति कर्मणां त्यागो विधीयते ? न हि प्रधानविरोध्यङ्गं भवति । यत्त मनुः–

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः' ॥

इति, तद् 'ब्रह्मचर्यात्प्रव्रजेत्' इति श्रुतिविरोधादप्रमाणमिति **विवरणाचार्याः** । अविरक्तविषयत्वन्तु युक्तम् । एतेन 'जायमानो वै ब्राह्मणस्त्रिभिः ऋण वा जायते' इति व्याख्यातम् ।

किञ्च न कर्मणां मोक्षहेतुत्वे प्रमाणमस्ति । तथाहि–न तावद्विविदिषावाक्यं मानम्, तस्येष्यमाणज्ञानार्थत्वात् । नापि 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह' इति मानम्, 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इत्यविद्याख्यकर्मणां मृत्युनाशकत्वेन द्वारभेदात्, चकारस्यान्वाचयार्थत्वात् । न च 'तान्याचरत नियतं सत्यकाम' इति श्रुतिर्मानम्, कर्ममात्रश्रवणात् । सत्यपदस्य 'न चैष वः पुण्यस्सुकृतो ब्रह्मलोकः' इति सत्यलोकपरत्वात् । नापि 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इति मानम्, पुण्यपदेन प्रतीकोपासकानामुक्तत्वात् ब्रह्मविदः सगुणब्रह्मोपासकस्यार्चिरादिमार्गैक्येन समुच्चयाच्चशब्दोपपत्तेः । न च 'सत्येन लभ्यस्तपसा' इति मानम्, मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परन्तप इति तप इति शब्देन ध्यानोक्तेः । 'नान्यः पन्थाः' 'नान्यैर्देवैस्तपसा कर्मणा वा' 'हत्वाविद्यां धियैवेयात् तद्विष्णोः परमं पदम्' 'प्लवा ह्येते अदृढा यज्ञरूपाः' 'नास्त्यकृतः कृतेन' इति कर्मनिषेधाच्च । न चात्र केवलकर्मणां निषधो न समुच्चयस्येति वाच्यम्, समुच्चये प्रामाणिके केवलकर्मनिषेधः, तस्माच्च समुच्चय इत्यन्योन्याश्रयात् । प्रमाणाभावेऽविशेषात् सर्वकर्मनिषेधोपपत्तेः । न च ज्ञानं करणत्वादितिकर्तव्यतात्वेन कर्माण्यपेक्षत इति युक्तम्, शमाद्यैरेवोपपत्तेः । प्रयोगश्च–ब्रह्मज्ञानं स्वकार्ये नोपकारापेक्षम्, अबोधनिवृत्तिमात्रफलत्वात्, शुक्तिज्ञानवत्, बन्धो ज्ञानमात्रनिवर्त्यः, अनौपाधिकभ्रमत्वात्, शुक्तिरूप्यवत् । नापि कर्मणां साध्यं पश्यामः । न तावद्ब्रह्मात्म्यैक्यम्, नित्य-

सिद्धत्वात्। न चाविद्याभेदाध्यासकर्मणां निवृत्तिः, 'भिद्यते हृदयग्रन्थिः' तथा 'विद्वान्नामरूपाद्विमुक्तः' 'एवमेवास्य परिद्रष्टुः इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति' इत्यादिभिर्ज्ञानमात्रसाध्यतावगतेः। अज्ञानोपादानत्वेन ज्ञानमात्रनिवर्त्यत्वाच्च।

किञ्च समुच्चयपक्षे ज्ञानसाध्यं किमपि न स्यात्। न कर्मोपाधीनां निवृत्तिः, सत्यत्वात्। नापि मिथ्याज्ञानस्य, क्षणिकत्वे स्वयमेव नाशात्, अतत्वे च नित्यत्वापत्तेः। तत्प्रवाहस्य च प्रवाहिनाशादेव नाशात्। नापि मिथ्याज्ञानसंस्कारस्य नाशः, शुक्तितत्त्वज्ञाने सत्यपि भ्रमजन्यसंस्कारसत्त्वेन विरोधात्, अन्यथा भ्रमजन्यसंस्काराभावे (स इति) तमिति स्मरणं न स्यात्। ज्ञानस्य मिथ्याज्ञानसंस्कारनाशहेतुत्वे मुक्तिहेतुश्रुतिबाधाच्च। न ब्रह्मात्मभावः फलम्, नित्यत्वात्। तस्मादनिर्वचनीयाविद्यानिवृत्तिर्ज्ञानमात्रसाध्येति न समुच्चय इति पूर्वपक्षसङ्क्षेपः।

अत्रोच्यते—यथा 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्' 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यादिश्रुतिभिस्तत्त्वज्ञानस्य मोक्षं प्रति हेतुत्वमुच्यते, तथा 'तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' 'सत्येन लभ्यस्तपसा ह्येष आत्मा' सम्यग्ज्ञानेन ब्रह्मचर्येण च तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि' इति कठमुण्डकादिश्रुतिभिः कर्मणामपि हेतुत्वमुच्यते। यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाः स ब्रह्मणस्सायुज्यं सलोकताञ्च गच्छति' इति। अत्र हि सायुज्यशब्देन नित्यब्रह्मैक्यरूपमोक्षार्थत्वं कर्मणां स्पष्टमुक्तम्। हारीतोऽपि—

'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्'॥ इति।

विष्णुपुराणेऽपि—

'तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते' इति। एवं सति किं नियामकं भवान् दृष्टवान् येन ज्ञानस्यैव मोक्षहेतुत्वं न कर्मणामिति ब्रूते? यत्तु कर्मणां फलान्तरवत्वान्मोक्षहेतुत्वविरोध इति, तज्ज्ञानहेतुत्वं वा कथं सङ्गच्छत इति वक्तव्यम्? अथ फलान्तरवत्वेऽपि काम्यस्य प्रासङ्गिकप्रत्यवायनाशार्थत्ववद्विधिवशाद्युक्तं ज्ञानार्थत्वम् इति मतम्, तुल्यं ममापि।

किञ्च काशीमरणादौ नैरपेक्ष्यश्रवणान्मोक्षहेतुत्वमस्त्येव। यथाह **वर्द्धमानः**—'ज्ञानकर्मणोर्निरपेक्षसाधनत्वश्रुतेः व्रीहियववद्विकल्प एव' इति। कर्मणो ज्ञानद्वारा ज्ञानस्य च कर्मद्वारा हेतुत्वस्य सुवचत्वाच्च। किमिदानीं समुच्चयेनापराद्धम्! ज्ञाने नैरपेक्ष्यश्रुतिर्बाधितेति चेन्न, काशीमरणादौ तुल्यत्वात्। पूर्वोक्त-

वाक्येषु समुच्चयस्यापि बाधापत्तेश्च । किञ्च 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इत्यविद्यापदवाच्यकर्मनिषेधात् 'ततो भूय इव ते य उ विद्यायां रताः' इति केवलज्ञानस्यापि निषेधात् समुच्चय एव सिध्यति । अन्यथा केवलज्ञाने निषिद्धे तद्धेतुत्वश्रुतिबाधापत्तेः ।

किञ्च दृष्टार्थानां व्रीहियवादीनां नैरपेक्ष्यबाधापत्तेः युक्तो विकल्पः । अदृष्टार्थत्वात्तु कर्मणां प्रयाजानूयाजवत्समुच्चय एव युक्तः । वचनेन परं तत्र विकल्पो यथा—'बृहत्पृष्ठं भवति रथन्तरं वा पृष्ठं भवति' इत्यत्र । यत्त्वानन्दावाप्तौ मिथ्याज्ञानध्वंसे च कर्मणामुपयोगाभावेनानपेक्षणान्न साक्षान्मोक्षहेतुत्वं किन्तु ज्ञानद्वारेति, तन्न; तत्र ज्ञानहेतुत्वं वा कर्मणां क्व दृष्टचरमिति वक्तव्यम् ? एतेन तत्त्वज्ञानप्रतिबन्धकदुरितनाशकत्वं प्रत्यूढम् । ज्ञानमात्रस्य लोके मिथ्याज्ञानध्वंसहेतुत्वदर्शनेऽपि मोक्षे विधिवशाद् दृष्टादृष्टजन्यत्वं न विरुद्धम् । लोके निध्यादिप्राप्तेर्दृष्टादृष्टहेतुत्वदर्शनात् । किञ्च ज्ञानस्य प्रमाणमात्राधीनत्वेन दुरितं न प्रतिबन्धकम् । न हि पापिनः प्रत्यक्षेण शब्देन वा कामिनीस्वर्गादीष्टज्ञानं न जायते ।

ननु यथा 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इति दर्शनमनूद्य श्रवणविधौ 'यत्साक्षादपरोक्षाद्ब्रह्म' इति ब्रह्मणो नित्यापरोक्षत्वेऽपि असम्भावनाविपरीतसम्भावनादिनिवृत्त्यर्थं लौकिकगाथाजन्यज्ञाननिवृत्त्यर्थं शास्त्राभासजन्यज्ञाननिवृत्त्यर्थं पुराणादिजन्यज्ञाननिवृत्त्यर्थं वा नियमविधिर्विवरणाचार्यप्रमुखैः स्वीकृतः, तथा कर्मणां ज्ञानार्थत्वविधावपि स्यादिति चेत्—न; पक्षे प्राप्त्यभावात्, व्यावर्त्याभावाच्च । अथ कर्मणामन्यत्र ज्ञानहेतुत्वादर्शनेऽपि 'यज्ञेन दानेन' इति शास्त्रविधानादेव यागस्वर्गयोरिव यज्ञादेर्ज्ञानस्वरूप उपयोगः, तन्न, तस्यापुरुषार्थत्वात्, अपूर्वप्रयुक्तत्वाद्धर्माणाम् । न हि 'व्रीहीनवहन्ति' इत्यवघातनियमो व्रीहिस्वरूपार्थः । यद्यपि 'सन्न्यासाद् ब्रह्मणः स्थानम्' इति स्मृतौ सन्न्यासस्य स्वतन्त्रं फलं श्रूयते, तथापि श्रवणाद्यभावे तत् । श्रवणादौ सति तु ज्ञानार्थत्वम् । अन्यथा तत्प्रकरणपाठवैयर्थ्यापत्तेः, कर्मणां ज्ञत्वेन ज्ञानं प्रति कारणत्वायोगाच्च । न च श्रुतस्य कर्मणां ज्ञानहेतुत्वस्य निर्वाहार्थं यागस्वर्गयोरपूर्वमिव चित्तशुद्धेर्द्वारत्वं कल्प्यत इति वाच्यम्, चित्तशुद्धेरप्यदृष्टजन्यत्वेन द्वारत्वायोगात् कर्मत्यागस्य सन्न्यासस्य ज्ञानार्थत्वविरोधाच्च । न च ग्रहणाग्रहणवद्विकल्पः, यज्ञेनेति श्रुत्या प्रकरणगम्याङ्गत्वस्य सन्न्यासस्य बाधात् । न च यज्ञादीनां ज्ञाने समुच्चयः, एकस्यां भावनायां सजातीयानेककारकनिवेशायोगात् । एतदेव कुत इति चेत्—नैरपेक्ष्यबाधापत्तेः । यत्र त्वरुणादौ सापेक्षाणामेव करणत्वं तत्रानेकेषामप्यन्वयः । न चात्र क्रयवद्भविष्यतीति वाच्यम्, अरुणगुणस्यैकहायनीपरिच्छेदद्वारवद् यज्ञादीनामन्योन्यपरिच्छेदायोगात् । अरुणयेत्यत्र सोमेनेतिवत्क्रयगतकरणत्वानुवादेऽपि यज्ञेनेत्यत्र वेदनस्य साध्यत्वेन तद्गतकरणत्वानुवादायोगात् । यद्यपि प्रत्ययान्ते मत्वर्थलक्षणया सिद्धान्ते सोमेन धात्वर्थगतकरणत्वानुवादः । तदुक्तं वार्तिके—

'गुणपक्षे त्रिधेयत्वं सङ्ख्याकारकयोरपि' इति। **एतद्वार्तिकटीकायामस्माभिरुक्तम्,** तथाप्यरुणादीनामितिकर्तव्यतात्वाद् 'वायव्यं श्वेतम्' इत्यादिवत् कल्प्य विशेषणविधिभिर्युक्तमनेकगुणविधानम्, न तु यज्ञादौ, करणत्वात्। एतेनैकवाक्यगतत्वादरुणादिवत् त्वाष्ट्रपात्नीवतवच्च समुच्चयो मूर्खोक्तः परास्तः, सापेक्षत्वाभावात्पात्नीवच्छब्दे यौगिके प्रकृताभिधानवदत्र तदभावाच्च। तस्माद् 'य इष्ट्या' इतिवज्जाताविकत्वेन सर्वसङ्ग्रहादाख्यातावृत्त्या वाक्यभेदमङ्गीकृत्य वेदनोद्देशेन यज्ञादीनां विधानम्। **न** चैकत्वं तन्त्रम्, दृष्टचित्तशुध्यर्थत्वेन वैतुष्यार्थमवघातस्येव यज्ञादेरनुष्ठानात्। अत एव क्रयवत्सम्भवत्समुच्चयः कैश्चिदुक्तः।

अन्ये त्वाहुः--होमश्राद्धभोजनाद्यसङ्ग्रहापत्तेः वाक्यभेदाच्च विहितेन कर्मणा वेदनं कुर्यादिति वाक्ये लक्षणयैकार्थविधानमस्तु 'जातपुत्रः कृष्णकेशः' इतिवद् 'अर्धमन्तर्वेदि मिनोति' इतिवच्च। तदुक्तं संक्षेपशारीरके--

'यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मबृन्दं गृहीत्वा
स्वोपज्ञयाम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति'॥

इति। मैवम्; सर्वेषां विहितानां समुच्चये बाधात् पशुनेतिवत् एकमात्रस्य वा साधनत्वात्। विहितैरित्युक्तौ 'कपिञ्जलान्' इतिवत् त्रिष्वेव विश्रान्तेश्च। **न च** क्रयवत्सम्भवत्समुच्चयः, तेषामानत्यर्थत्वेन दृष्टार्थत्वात्। अत्र च संन्यासवज्जन्मान्तरीयाणामप्युपयोगेनादृष्टार्थत्वात्। न चात्रापि दृष्टार्थत्वम्। न हीदं लोके दृष्टम्, न वा नियमः, सर्वविशिष्टैकभावनाविधौ प्रयोगैक्यापत्तेश्च। तस्माद्वाक्यभेदेनैव यज्ञादीनां विधानात्सम्भवत्समुच्चयः। न वा सोऽपि, **पशुसोमाधिकरणे राणके** 'दशभिः क्रीणाति' इति युगपत्समुच्चयविधानात्। अथ वाक्यमसिद्धं कृत्वा सम्भवत्समुच्चयः, तन्न, एकार्थत्वेन विकल्पापत्तेः। अन्यथा षष्टिदक्षिणादौ विकल्पोच्छेदापत्तेरित्यन्ये। न त्वेतदपि युक्तम्, एकवाक्येऽपि क्रयवद्यज्ञादिविशिष्टवेदनस्य विधौ 'तमेव विदित्वातिमृत्युमेति' इति फलसम्बन्धविधानात्। न च ज्ञाने न विधिः, 'यदेव विद्यया' इत्यादौ राणके तद्विध्यङ्गीकारात्। पार्थसारथिरपि यत्तु विधिरूपं वाक्यम् 'आत्मा वारे द्रष्टव्यः' इत्याह, तन्न; अनुपादेयगुणसहकृतेऽसन्निधाने 'फलं वा कर्मसन्निधौ' इतिवत्कर्मभेदापत्तेः। **न च** प्रयोगैक्यम्, कारकाक्षिप्ततत्तद्वाक्यबोध्यनानाप्रयोगाणामेव 'सर्वेभ्यो ज्योतिष्टोमः' **'य इष्ट्या'** इतिवत् 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इतिवच्च फलार्थत्वात्। तदुक्तम्--

'दर्शादिवत्फलैक्येऽपि प्रयोगस्य भिदा श्रुतेः।
भिन्नकालप्रयोगस्थमेवात्राण्युपतिष्ठते'॥ इति।

यत्तु कश्चिदाह--विविदिषन्तीत्येकपदे साध्यभूतवेदनानुभवाद्वेदनभावनाया विधेः तत्र ( तन्न ? ) विध्यनुवादयोरेकपदे विरोधात्। यद्यपि 'सौर्यं निर्वपेत्' 'पशुमालभेत' इत्यादावेकपदे विध्यनुवादसत्वान्न दोषः, तथापि 'प्रथमभक्षः' त्र्यङ्गैः स्विष्टकृतम्' इत्यादौ विधेयत्वोद्देश्यत्वयोर्निवेशे एव वैरूप्यापत्तेः ?

विविदिषन्तीत्यत्र भावनान्तरं विधेयमिति, तन्न; ज्ञानविधौ तदप्रसङ्गात्। तत्त्व· तस्तु न विध्यनुवादयोर्विरोधः, अन्यथा तदभावेऽपि दोष एव, विरुद्ध-त्रिकद्वयोच्छेदेन सर्वग्रन्थविरोधात्, विधेरनुवादाविरोधाद् उद्देश्यस्योपादेय विरोधाच्च। 'दण्डी प्रैषान्' 'सप्तदशारत्निः' 'लोहितोष्णीषाः' इत्यादावेकपदे द्वयसत्त्वाद्, एवंशपथे न्यायाभावाद् वार्तिकविरोधाच्च। न च 'एकं साम तृचे क्रियते स्तोत्रीयम्' इत्यत्र ऋग्गतत्रित्वस्य स्तोत्रार्थत्वमिवारत्निगत-सङ्ख्या यूपाङ्गमिति वाच्यम्, तृचशब्देन स्तोत्रानुक्तेस्तत्र वाक्यात्तादर्थ्यं युक्तम्। सप्तदशारत्निरिति यौगिकेऽस्येति प्रकृतद्रव्योक्तेः श्रुत्यैव तादर्थ्यमिति वैषम्यम्। 'हिरण्यमालिनः' 'दण्डी' इत्येकपदे समासोऽपि न ( ? )। न च कृत्स्नसत्वाद-दोषत्वम्, लक्षणाया सोमादौ सत्वेनादोषत्वापत्तेरिति दीपिकालोके ज्ञेयम्। नापि मोक्षे समच्चयः, अदृष्टनिवृत्तिरूपस्य तस्य प्रतियोगीतरादृष्टजन्यत्वानभ्युपगमात्। अभ्युपगमे वा इष्टापत्तेः। किञ्च काशीमरणतत्तीर्थस्नानगयाश्राद्ध-दानादौ 'ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते दक्षिणावन्तो ऽमृतं भजन्ते' 'अपाम सोमममृता अभूम' 'तमेतं वेदानुवचनेन' इत्यादिश्रुतिस्मृति पुराणसहस्रमास्तिकशिरोमणिना भवता ज्ञानहेतुत्वे कथं समर्थनीयम्?

ननु 'आभूतसम्प्लवं स्थानममृतत्वं हि गीयते' इति विष्णुपुराणाद् ब्रह्म-लोकप्राप्तिरमृतशब्देनोच्यत इति चेत्—; 'गौणमुख्ययोर्मुख्ये सम्प्रत्ययः' इति न्यायेन गौणग्रहणायोगात्। ननु ज्ञानादेव तु कैवल्यम्' इत्याद्यैर्मोक्षस्य ज्ञानमात्र-साध्यत्वेऽवगते कर्मविष्णुभक्त्यादीनां साधनत्ववचनानि क्रममुक्तिपक्षाश्रयणेन नेयानि। तथाहि—सगुणब्रह्मोपासनानां हि सारोप्यसालोक्यसामीप्यसायुज्याद्य-र्थत्वं तत्र तत्र श्रूयते। कैवल्यमुक्तिस्तु ज्ञानेनैवेति। अत एव याज्ञवल्क्याद्युक्तानां दहराद्युपासनानामर्चिरादिमार्गेण क्रमेणैव मोक्षार्थत्वं न तु साक्षात्। मैवम्; सारूप्यादेर्गौणमुक्तित्वेन तद्ग्रहणे मानाभावात्। कर्मणां मोक्षहेतुत्वं साधन-लक्षणया ज्ञानद्वारेति चेत्—ज्ञानस्यैव मोक्षहेतुत्वे कर्मद्वारा किं न स्यात्। ज्ञान-कर्मणोरुभयोरप्यविद्यावद्विषयत्वेऽन्यतरस्य द्वारत्वे मानाभावात्। न च कर्मणां मोक्षहेतुत्वे संन्यासे शमदमादौ च प्रवृत्तिर्न स्यादिति वाच्यम्, कर्ममात्रेण मुक्त्य-नङ्गीकारेण ज्ञानार्थं तत्र प्रवृत्तिसिद्धेः।

ननु 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'त्यजतैव हि तद्धेदं त्यक्तुं प्रत्यक्षपरं पदम्' इति भाल्लवेयश्रुत्या, 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति, 'नास्त्यकृतः कृतेन' अकृतो मोक्षः, कृतेन कर्मणा नास्तीत्यर्थः। 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुत्या—

'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन।
कर्मणां परिणामित्वादा विरिञ्चादमङ्गलम्'॥

इति स्मृत्या च कर्मणां निषेध एव प्रतीयते। तज्जन्यत्वे सातिशयत्वम-

नित्यत्वञ्च स्यादिति चेत्—न; केवलकर्मणां निषेधेन समुच्चयपक्षे दोषाभावात्। यद्यप्यविद्यानिवृत्तिर्ज्ञानमात्रजन्या, यतो ज्ञानमज्ञानस्यैव निवर्तकम्। तदुक्तम्—

'अविरोधितया कर्म नाविद्यां विनिवर्तयेत्'

इति। जीवस्य ब्रह्मात्मभावश्च स्वाभाविको न ज्ञानजन्यः 'ब्रह्मैव सन् ब्रह्माप्येति' 'विमुक्तश्च विमुच्यते' इत्यादिश्रुतेः। तथाप्यसम्भावनादिनिवृत्तौ विधिवशाद्युक्तस्समुच्चयः। 'ब्रह्माभिसम्पद्यते' 'न स पुनरावर्तते' 'तेषामिह **न** पुनरावृत्तिः' 'तेषां न पुनरावृत्तिः' 'ब्रह्मलोकात्सनातनात्' 'न चेह जायते पुनः' 'इहेदमावर्त्ते नावर्तते' इत्यादिवाक्यैः कर्मसाध्यत्वेऽपि नित्यत्वावगमाच्च।

अत्र **विवरणाचार्याः**—वर्तमानापदेशेन ब्रह्माभिसम्पत्तिसमकालायाः पुनरावृत्तेः प्रसक्त्यभावेन निषेधायोगात् नावर्तिष्यन्त इति कल्पने कृतकत्वानुमानेन 'कर्मचितो लोकः क्षीयते' इति श्रुत्या च बाधात् 'इहेदम्' इत्यस्मिन् कल्पे नावृत्तिरुच्यते, कल्पान्तरे त्वावर्तेत एवेत्याहुः। तन्न; कृतकत्वानुमानस्य ध्वंसे व्यभिचारात्। ध्वंसस्यानन्तत्वदर्शनात्। भावकार्यपरा व्याप्तिरिति चेत्—तर्हि मोक्षे कर्मजन्यत्वेऽपि श्रुत्यानन्तत्वावगतेस्तद्भिन्नभावकार्यपरा व्याप्तिरस्तु, 'कर्मचित' इत्यनावृत्तिश्रुतिविरोधेन लोकसिद्धानुवादाच्च मोक्षभिन्नकर्मफलपरत्वात्। कर्मसाध्यस्य क्षयित्वेऽपि ज्ञानसहकारेण तदभावाच्च। न च समुच्चयपक्षे संन्यासेऽप्यनुष्ठानापत्तिः, 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादिवाक्यविरोधो वेति वाच्यम्। पूर्वानुष्ठितप्राग्भवीयकर्मापूर्वसत्त्वेन समुच्चयसिद्धेः। न हि संन्यासदशायामेवानुष्ठितैस्समुच्चय इति कस्याप्यभिमतम्।

किञ्च पूर्वोक्तनिषेधवाक्यानि ज्ञानविधिस्तुत्यर्थोऽर्थवाद एव, तथाप्येषैव गतिः। न हि त्वयापि कर्मणां शास्त्रान्तरप्राप्तं मोक्षहेतुत्वं निषेद्धुं शक्यम्, प्राप्ते निषेधायोगात्;[1] अष्टदोषनिदानविकल्पापत्तेश्च। अप्राप्तं नतराम्, प्राप्तिपूर्वकत्वान्निषेधस्य। नापि विधिर्वा मन्त्रो वा सम्भवति, विधेयासमर्पणात् प्रकाश्याभावाच्च। तस्मात्कर्मनिन्दया ज्ञानं स्तूयते। ननु ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनाविधेयत्वात्कथं तत्स्तुतिः? मैवम्, क्वचिद् दुर्गन्धादिज्ञानस्य कृत्यविषयत्वेऽपि सर्वत्र तदभावात्। 'यदेव विद्यया करोति' इत्यादौ राणकेन तदङ्गीकाराच्च। न च विद्याशब्दस्योपासनापरत्वम्, एवकारोपबद्धयच्छब्देन वीप्सोक्तेः यद्यत्करोतीत्यर्थात् 'वारणो यज्ञावचरः' इतिवद्वाक्येन प्रकरणबाधेन सर्वार्थ (त्वा) त् अध्ययनजन्यार्थज्ञानस्य क्रत्वङ्गत्वेन विधेयत्वाच्च। तेन युक्ता ज्ञानस्तुतिः। यथा 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्यनुदितहोमनिन्दया उदितहोमः स्तूयते, न तु स निषिध्यते, तद्विधायकवाक्यवैय्यर्थ्यापत्तेः

१. शास्त्रप्राप्तस्य शास्त्रान्तरेण निषेधे उभयोरपि शास्त्रत्वाविशेषेण तुल्यबलत्वात् विकल्पे पर्यवसानं स्यात्। स च विकल्पोऽष्टदोषनिमित्तको भवेदित्यर्थः। गृहीत प्रामाण्यपरित्यागः, अगृहीताप्रामाण्यस्वीकारः, परित्यक्तप्रामाण्यस्वीकारः स्वीकृता प्रामाण्यपरित्याग इति चत्वारः पक्षे, पक्षान्तरे त एव चत्वार इत्यष्टौ दोषाः।

तथात्रापि। तदुक्तं शाबरभाष्ये—न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुम्' इति।

एतेन

'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन'

इत्यादीनि व्याख्यातानि। यद्यपि 'मणिकर्णिकां गतस्य कर्णमूले महेश्वरस्तारकं ब्रह्म व्याचष्टे' 'येन केनचन यजेतापि वा दर्विहोमेनानुपहत एव भवति' इति श्रुत्या 'इदं मेऽनेनाङ्गं संस्क्रियते इदं मेऽनेनाङ्गमुपधीयते' इति च श्रुत्या, 'संस्क्रियते' ब्रह्माभिव्यक्तियोग्यं क्रियत इत्यर्थः। 'धर्मेण पापमपनुदति' इत्यादिश्रुत्या—

'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' ॥
'यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' ॥

तथा—

'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः'

इत्युपक्रम्य,

'सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे'

इति चोक्त्वा,

'बुध्या विशुद्धया युक्तो वृत्त्यात्मानं नियम्य च।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्। गी. १८.५५
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्॥
ददामि बुद्धियोगं तं येन मामुपयान्ति ते। गी. १०.१०
तेषामेवानुकम्पार्थमहमज्ञानजं तमः॥
नाशयाम्यात्मबोधस्थो ज्ञानदीपेन भास्वताम्। गी. १०.११

भागवतेऽपि—

'अच्युताङ्घ्रि भजतोऽनुवृत्त्या सम्भक्तिर्विरक्तिर्भगवत्प्रबोधः।
भवन्ति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात्' ॥
'आरुरुक्षोर्मुनेर्योग-कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते' ॥

तथा—

'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते' ॥

इत्याद्यैः, 'विविदिषन्ति यज्ञेन दानेन' इति वाक्येन च कर्मणां चित्तशुद्धिहेतुत्वं ज्ञानसाधनत्वञ्च विधीयते, तथापि तत् संयोगपृथक्त्वन्यायेन न विरुध्यते। तथाच भट्टपादैर्व्याकरणाधिकरणे ज्ञानकर्मसमुच्चय उक्तः—(पृ. २८८ पू. सं.)

'न च ज्ञानविधानेन कर्मसम्बन्धकारणम्'

इति। प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वदुरितक्षयार्थमकरणनिमित्तानागतप्रत्यवायपरिहारार्थञ्च कर्तव्यानि। न च तेषां भिन्नप्रयोजनवत्त्वाद् भिन्नमार्गत्वाच्च बाधविकल्पाङ्गाङ्गिभावाः सम्भवन्तीति' न्यायसुधाप्यत्रत्त्यानुसन्धेया। । बृहट्टीकायामपि-

'ननु निःश्रेयसं ज्ञानाद् बन्धहेतोर्न कर्मणः।
नैकस्मादपि तत्किन्तु ज्ञानकर्मसमुच्चयात्' ।।

इति। किञ्च कर्मणां चित्तशुध्यर्थत्वे तत्तत्फलार्थानां गुणकर्मत्वं प्रधानकर्मत्वञ्च विरुद्धमापद्येत। ज्ञानाङ्गत्वेन केवलप्रधानस्य फलाजनकत्वात्संन्यासिनः कर्मणामप्यनुष्ठानापत्तिः। न च द्रव्यार्जनवदुपकारकत्वमेव नाङ्गत्वमिति वाच्यम्, 'विविदिषन्ति यज्ञेन' इति श्रुत्या अङ्गत्वावगमात्। किञ्च भगवद्भक्तेस्तत्र तत्र मोक्षहेतुत्वं श्रूयमाणे कथमुपपद्येत ? तथाच गीतासु

'नाहं योगैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।।
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप' ।। इति ।।

'कृष्णप्रणामी न पुनर्भवाय' 'माघस्नानं तु यः कुर्यात् नास्ति तस्य पुनर्भवः' ।। भारतेऽपि—'किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात्' इति मोक्षोपाये पृष्टे भीष्मेणोक्तम्—

'तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन् तपस्यंश्च यजमानस्तमेव च ।।

गीतास्वपि--

'चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' ।।
अनादि निधनं विष्णुं सर्वलोकमहेश्वरम्।
लोकाध्यक्षं स्तुवन् नित्यं सर्वदुःखातिगो भवेत् ।। इति ।

तथा—

'वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः। सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम्'। (वि. स. स्तो.)

इति भगवद्भक्तेस्तत्र तत्र मोक्षार्थत्वश्रवणात्। जिज्ञासुरिति तत्वज्ञानार्थत्वम् ज्ञानीति मोक्षार्थत्वम् भजन्त इति वर्तमानार्थत्वेऽपि अप्राप्तार्थत्वाद्विधिः। भजेयुरित्यर्थः। यद्यपि

प्रोक्तेन भक्तियोगेन भजतो मां सकृन्मुने।
कामा हृदिस्था नश्यन्ति सर्वे मयि हृदि स्थिते ।।
भिद्यते हृदयग्रन्थिः भिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ।।

इति श्रुत्या 'ज्ञानाग्निस्सर्वकर्माणि' इति स्मृत्या च तत्त्वज्ञानेन कर्मनाशात् ज्ञानस्यैव हेतुत्वं प्रतीयते,तथापि पूर्वोक्तन्यायेनास्यार्थवादत्वात् कर्मणामपि हेतुत्वं न विरुद्धम् । न च 'कर्माणि' पापकर्माणि क्षीयन्त इति वाच्यम्, तत्त्वज्ञानरूपे कार्ये उत्पन्ने प्रतिबन्धकाभावस्य कारणत्वायोगात् । पूर्ववाक्ये 'सुकृतिन' इति ज्ञानोत्तरं सुकृतश्रवणाच्च ।[1] 'तमु स्तोतार' इति ऋग्वेदश्रुतिर्भगवद्भक्तेर्मोक्षहेतुत्वं ब्रवीति । 'पूर्व्यं' जगत्कारणम्, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः । हे स्तोतारः स्तुध्वम् स्तोत्रैर्गुणकीर्तनं कुरुध्वमिति । अत्र चाप्राप्तत्वाद्गुणकीर्त्तनं कुर्यादिति विधीयते । यद्यपि मन्त्राणां स्मारकत्वेन 'देवाँश्च याभिर्यजते ददाति' इतिवद्वि-धायकत्वाभावस्तथापि मन्त्राणामपि 'वसन्ताय कपिञ्जलानालभेत' इत्यादीनां विधायकत्वात् । ब्राह्मणत्वेऽपि 'यस्योभयं हविरार्तिमार्च्छेत्' इत्यस्याविधायक-त्वान्न ब्राह्मणगतत्वं मन्त्रगतत्वं वा विधायकत्वतदभावयोः प्रयोजकम् । किन्तु कर्तृवाचियच्छब्दाद्यनुबन्धतदुपबन्धौ प्राप्तार्थत्वतदभावौ वा इत्युक्तं वार्तिके भट्टसोमेश्वरेण च । फलमाह ऋतस्येत्यादि । शारीरकभाष्ये 'ऋतं पिबन्तौ इति मन्त्रे ऋतं कर्मफलमुक्तम् । ऋतस्य कर्मफलस्य सुखदुःखादेर्गर्भे कारणं भ्रमं (जनुष्या) जनकेनाज्ञानेन सह पिपर्त्तन **पूरयत नाशयत** । अविद्यानिवृत्तिर्मोक्षः, फलमित्यर्थः । विष्णुपुराणे—

न साधयति मां योगो न साङ्ख्यं धर्म एव च ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ।।
साङ्ख्यमात्मज्ञानम् । त्यागः संन्यासः ।
'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा' ।। इति ।

प्रत्यक्षविधिना भक्तेर्ज्ञानस्थानापत्तेश्च । पूर्ववाक्ये च 'न गिरा गिरेति ब्रूयात् ऐरं कृत्वोद्गेयम्' इतिवन्निषेधानुवादात् । पाद्मे—

'संसारसर्पसन्दष्टनष्टश्चेष्टैकभेषजम् ।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः' ।।

## ईश्वरविचारः

ननु निरीश्वरवादिनस्ते कोऽयं भक्तिमार्गप्रवेशः ? पतत्त्वयं प्रवादाशनि-रेकदेशिषु । अस्माकन्त्वस्त्येवेश्वरः । तथाच आदौ विश्वेश्वरनतिः—

'विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ।
श्रेयः प्राप्तिनिमित्ताय नमस्सोमार्धधारिणे' ।। इति ।

श्लोकवार्तिकम्

---

१. तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन हस्ते विष्णो सुमतिं भजामहे इति समग्रो मन्त्रः । (ऋग्वे० अ० २ अर व २६. मं ३)

**न्यायरत्नाकरो**ऽपि 'श्लोकवार्तिकमारिप्सुस्तस्याविघ्नसमाप्तये विश्वेश्वरं महादेवं स्तुतिपूर्वं नमस्यति'। तृतीये—

'अपि च व्योमरूपोऽपि परमात्मा श्रुतौ श्रुतः।
इज्यते वारिणा नित्यं, यः खं ब्रह्मेति चोदितः'।

'को ह्येवान्यात् कः प्राण्यात् य एष आकाश आनन्दो न स्यात्' 'कं ब्रह्म खं ब्रह्म' इति श्रुत्युक्तः तत्त्वमस्यादिगम्यस्तच्छब्दार्थः स्वाधिष्ठातृसूर्यरूपी सन्ध्यायां गायत्र्या जलेनार्घ्येणार्च्यते इति न्यायसुधायामपि। (न्या. सु. पृ. १०१० चौ. सं.)

पार्थसारथिरपि—'लक्ष्मीकौस्तुभवक्षसम्' इत्यादि। राणकोऽपि—'उमानन्दमाराध्य शारदामीश्वरं गुरुम्' इति। तेन युक्तं भक्तेर्मोक्षार्थत्वम्। तेन यदुदयनाचार्याद्यैर्मादृशेषु निरीश्वरत्वमारोपितम्, यच्च **नैषधे**—'मीमांसयेव भगवत्यमृतांशुमौलौ तस्मिन् महीभुजि तथानुमतिर्न भेजे' इति तत् ग्रन्थादर्शनात्सिद्धान्ताज्ञानाच्चोपेक्ष्यम्।

## ईश्वरस्य अनुमानगम्यत्वनिरासः।

अत्र **पार्थसारथिः**—'शरीरानपेक्षोत्पत्तिकं गिरिक्षित्यादि बुद्धिमत्कर्तृकं कार्यत्वात् घटवत् इत्यनुमानात् तार्किकैरीश्वरो नित्यज्ञानेच्छायत्नवान् साध्यते, सर्गादौ च तदिच्छया क्षेत्रज्ञादृष्टाच्च परमाणुषु क्रियया द्व्यणुकादिक्रमेण सर्गः विभागे च प्रलयः' इति, तन्न; प्रयत्नं विनेच्छामात्रेण स्पन्दायोगात् प्रयत्नस्येच्छा-जन्यस्पन्दस्य च शरीरजन्यत्वनियमाच्च सर्वगोऽप्यात्मा शरीरदेश एवेच्छायत्नौ ज्ञानं चारभते। अतः शरीरं विना कथं तेषां सम्भवः? न च ते ज्ञानेच्छायत्ना नित्याः। तेषामनित्यत्वव्याप्तेः। क्षित्यादिकं शरीरिकर्तृकं कार्यत्वात् घटवत् इति सत्प्रतिपक्षाच्च। क्षित्यादिकं न बुद्धिमत्कर्तृकं शरीरिकर्तृकत्वाभावात् व्योमवत् इति वा। नित्यं शरीरं त्वयुक्तमेव। सावयवत्वस्य कार्यत्वव्याप्त्या क्षित्यादाव-प्यकार्यत्वापत्तेः। किञ्च नित्यमपि सर्वकार्यहेतुर्ज्ञानादि एकमनेकं वा? नाद्यः, विषयभेदेन तेषां भेदनियमात्। अथ समूहालम्बनवदेकत्वमुच्येत, तन्न, अतीता-नागतानां तत्तत्कालविशिष्टानां यौगपद्याभावात्। सर्गकाले प्रलयहेतोः प्रलयकाले सर्गहेतोश्च ज्ञानादेस्सत्वे एकस्याप्यारम्भायोगात्। नष्टे च घटे तदुत्पादनाश-विषयज्ञानादेस्सत्वे बाधात्। असत्वे च नित्यत्वहानेः। नान्त्यः, सर्गप्रलयहेत्वो स्सत्वेन व्यवस्थायोगात् बाधाच्च। अतो नैवमीश्वरसिद्धिः। किन्तु वेदवशा-देवेति। न चोत्पन्ननष्टे घटे विषयतैव नष्टा न त्विच्छादिकमिति वाच्यम्। अस्मदादिज्ञानेच्छादावपि विषयतामात्रनाशेनैक्यापत्तेः। अनेकज्ञानेच्छायत्नानां तत्प्रागभावध्वंसानां कल्पनापेक्षया तस्यैव लघुत्वाच्च। न चादृष्टात् सामग्र्य-न्तरात् तत्तद्देशकालवशाद्वा व्यवस्था, निमित्तमात्राद्वैचित्र्यादर्शनात्। सर्वत्र सामग्रीसत्वे तद्व्यतिरेके कार्यव्यतिरेकादर्शनात् अदृष्टेनोपपत्तेश्च। अतो वेदव-शादेव मोक्षार्थतयोपासनावशाद्वा ईश्वरसिद्धिः न तु युक्त्येति। तमेतं ज्ञानकर्मस-मुच्चयं वेदान्तिनो न क्षमन्ते।

### मोक्षविचारः

ननु निःश्रेयसे बहवो विवदन्ते। न तत्रैकमपि युक्तम्। तथाहि--भूतचतुष्टयसङ्घातरूपो देहादिरेव चेतनः, न त्वनुमानागमादिगम्य आत्मास्तीति प्रत्यक्षमात्रप्रमाणवादिनश्चार्वाकाः। इन्द्रियाणि मनः प्राणो वा प्रत्येकं समुदायेन वा चेतन इति तदेकदेशिनो लोकायतिकाः। शून्यमात्रमात्मा नान्यत्तत्वमस्तीति तत्त्व ज्ञानाच्छून्यभावनाप्रकर्ष एव मोक्ष इति माध्यमिकाः।

देहादिभिन्नं क्षणिकविज्ञानसन्तान एवात्मा, तस्य सर्वं दुःखं सर्वं क्षणिकं सर्वं तुच्छं सर्वं शून्यमिति चतुर्विधभावनया सोपप्लवस्य विज्ञानसन्तानस्यात्यन्तनाशो वा निरुप्लवसर्वसन्तानान्तर्भावो वा मोक्ष इति विज्ञानवादिनः।

देहादिभिन्नो देहपरिमाण एवात्मा। तस्य पुर्यष्टकवेष्टितस्य स्वशास्त्रोक्तेन केशोल्लुञ्छनतप्तशिलारोहणादितपसा सुखात्मकस्य निरावरणज्ञानस्य आत्माकारसमाधिपरिपाकात् सन्ततोर्ध्वगमनम् अलोकाकाशगमनं वा मोक्षः। तदेव स्वातन्त्र्यम् पञ्जरस्थखगस्येव तद्भङ्गे इत्यार्हताः। आर्हत एव स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्याद्वक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्तिचावक्तव्यश्चेति सप्तभङ्गनयवादी स्याद्वादी। स्याच्शब्दः कथञ्चिदर्थः। तेन वस्त्वनेकान्तवादः।

न चैतन्मते मोक्षे तत्साधने वा कामना सम्भवति। चार्वाकाणां तावत् देहेन्द्रियादेर्भौतिकत्वेन विनश्वरत्वात्तन्नाशे कस्य मोक्षफलभागिता स्यात्? दुःखहेतुत्वादात्मनोऽपि मोक्षे नाश इति चेत् न; सिद्ध्यसिद्धिभ्यां व्याघातात्। देहादिभिन्नो यदि न सिद्धः कस्य नाशः स्यात्? अथवाल्पस्थावरादिषु देहादिभेदेऽपि योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄननुभवामि इत्याद्यैक्यानुसन्धानात् जातमात्रस्य स्तन्यपाने प्रवृत्तिदर्शनाच्च देहादिभिन्नस्सिद्धः। ततस्तस्य नित्यत्वेनैव सिद्धेर्नाशोऽशक्य एव। अन्यथा धर्मिग्राहकमानबाधापत्तेः। आत्मनः परमप्रेमास्पदत्वेन नाशस्यानिष्टत्वाच्च। एतेन शून्यवादोऽपि परास्तः। क्षणिकवादेऽपि सोपप्लवविज्ञानस्य दुःखरूपत्वात् तन्नाशे वाऽऽत्मन एव नाशात् कस्य मोक्षः स्यात्? न च सर्वज्ञसन्तानान्तर्भावः, तस्य सर्वदुःखवेदनारूपत्वे संसारादप्यत्यन्तदुःखरूपत्वात् अतत्वे च सर्वज्ञताहानेः स्वभावभिन्नयोरन्तर्भावायोगात्। औपाधिकभेदे वा द्वैतवादापत्तेः। सर्वज्ञसन्तानोऽपि सन्तानाभिन्नो भिन्नो वा? नाद्यः, क्षणिकत्वेन विनाशापत्तेः। नान्त्यः, सोऽपि क्षणिको नित्यो वा? नाद्यः, मुक्तेर्विनश्वरत्वेनाकाम्यत्वात्। नान्त्यः, क्षणिकत्वभङ्गापत्तेः। नाप्यार्हतपन्थाः—सततोर्ध्वगमनस्य अलोकाकाशावस्थानस्य वा क्रियात्वेन मोक्षस्य विनाशापत्तेः। सुखरूपत्वे च तस्य जन्यत्वे विनाशापत्तिः। अजन्यत्वे संसारेऽप्युपलम्भापत्तिः।

अस्तु तर्हि देहेन्द्रियादिभिन्नस्य बुद्ध्यादिनवविशेषगुणाश्रयस्य विभोरात्मनः द्रव्यादिषट्पदार्थतत्त्वज्ञानेनात्मज्ञानात् दुःखतत्प्रागभावासहवर्त्तिदुःखस्य

बुद्ध्यादीनाञ्च ध्वंसो मोक्ष इति काणादमतम्। अस्तु वा गौतमीयं मतम्-श्रवणमनननिदिध्यासनपूर्वकात्प्रमाणादिषोडशपदार्थतत्त्वज्ञानात् सवासनमिथ्याज्ञानध्वंसे तत्कार्यरागद्वेषमोहाभावे प्रवृत्तेरभावात् धर्माधर्मनिवृत्तौ शरीरान्तराभावात् पूर्वकर्मणां भोगेन क्षये एकविंशतिप्रभेददुःखस्यात्यन्तनिवृत्तिरिति। तथाहि—देहेन्द्रियादिभिन्न आत्मा तावत्प्रमाणत्रयसिद्धः। प्रत्यक्षं तावत् 'योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄन् अनुभवामीत्यवादिषि तं देहभेदेऽप्येकं स्थायिनं प्रतिसन्धातारं विषयीकरोति। तस्य च न पूर्वावधिरस्ति। जातमात्रस्याद्य स्तन्यपाने प्रवृत्त्यनुपपत्त्या तज्जातीयेष्टहेतुतास्मरणतद्धेत्वनुभवस्य प्राग्भवीयस्य कल्पनात्। तत्राप्येवं कल्पनेन ततः पूर्वमपि कल्पनात् अनुभवसंस्कारस्मृतीच्छाप्रवृत्तीनामेकाश्रयविषयत्वेनैव कार्यकारणभावात्। तथा च सूत्रम्—'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यत्मनो लिङ्गम्' इति (न्या १–?–) देहस्याचेतनत्वेन भोग्यत्वेन भोक्त्रर्थत्वात् जडत्वेन तस्य दृष्टत्वाच्च। एतेन गौरोऽहमित्यादिप्रत्यक्षेण शरीरविषयेण तद्भिन्नस्य तत्त्वमस्यादिश्रुत्या नित्यस्यात्मनः कथं बोधः? उपजीव्येन प्रत्यक्षेण श्रुतेर्बाधादिति शङ्का परास्ता। प्रत्यक्षस्योक्ततर्करूपसहकार्यभावेऽऽभासत्वात्। किञ्च प्राणादिवायोरूर्ध्वादिगतिहेतुर्यत्नो ज्ञानसुखादयश्च मृतशरीरेऽभावादयावद्द्रव्यभावित्वाच्च, प्रत्यक्षत्वेऽपि पराप्रत्यक्षत्वात् कारणगुणपूर्वत्वाभावाच्च न शरीरस्य विशेषगुणाः। तस्य हि गुणा रूपादयः परप्रत्यक्षाः कारणजन्याश्च। न च शरीरावयवे छिन्ने शून्ये वा ज्ञानाद्यस्ति। अतः शरीरभिन्नो गुणी सिद्धः। स चानादिः। एवमनादित्वाद्विनाशहेत्वभावाच्चानन्तत्वं व्योमवत्। 'अविनाशी वा अरे अयमात्मा, एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' इत्यादिश्रुतेः। एवं प्रत्यक्षानुमानशब्दैर्नित्यत्वेऽनित्यत्वव्याप्यसावयवत्वमध्यमपरिमाणनिवृत्तौ सर्वत्र कार्योपलम्भात्परमाणुत्वाभावे विभुत्वं सिद्ध्यति। 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेश्च। एवं देहादिभिन्नस्यात्मनो बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारा नव विशेषगुणा मनस्संयोगजन्या इति प्राभाकरवैशेषिकतार्किकाः। तत्सम्बन्ध एव संसारः तन्नाशश्च मोक्षः। तथाच सूत्रम् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः' (न्या. १–१) इति। तेनात्यन्तिकदुःखनिवृत्तिरेव पुरुषार्थत्वादपवर्ग इति।

नैतद्युक्तम्; लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः। न च दुःखाभावस्य पुरुषार्थत्वे सुखानुगतं लक्षणं प्रमाणं वाऽस्ति। ननु निरुपाधीच्छाविषयत्वं पुरुषार्थत्वम्। तत्त्वं च जन्येच्छाऽजन्येच्छाविषयत्वम्। अत्रेच्छयाऽजन्यत्वमितीच्छा विशेषणं साधनेच्छाव्यावृत्त्यर्थम्। तदिच्छायाः फलेच्छाजन्यत्वात्। सर्वेच्छाया ईश्वरेच्छाजन्यत्वेनासम्भवनिवृत्तये जन्यपदम्। प्रमाणमपि 'दुःखत्वं देवदत्तदुःखत्वं वा, स्वाश्रयप्रागभावासमानकालीनध्वंसप्रतियोगिवृत्ति, भावकार्यमात्रवृत्तिधर्मत्वात्' इत्यनुमानं सर्वमुक्तौ एकमुक्तौ चास्त्येव। 'खे वात्यन्त-

विमुक्तश्चरति' इत्यादि श्रुतयश्चेति। न; निरूपाधित्वं ह्युपाधिराहित्यम्। तेनेच्छासामान्यकारणातिरिक्तस्य सर्वस्य व्यावर्तयितुं युक्तत्वात्फलेच्छामात्रव्यावृत्तौ कुलधर्मत्वापत्तेः। तेन दुःखाभावेच्छायाः प्रतियोगिद्वेषजन्यत्वेन सामान्यकारणातिरिक्तजन्यत्वान्न पुरुषार्थत्वम्। किन्तु सुखस्यैव। न च पुरुषार्थद्वयकल्पने प्रमाणमस्ति, दुखाभावस्य सुखशेषत्वेन गौणपुरुषार्थत्वात्। न च वैपरीत्यं शङ्क्यम्। व्यभिचारात्। सुखकाले दुःखाभावस्य नियतत्वात् दुःखाभावकाले च सुषुप्तिप्रलयादौ सुखस्याभावान्न दुःखाभावार्थता। नन्वत एवानुगमात् दुःखाभावः पुरुषार्थः, सुखकाले सत्वादिति चेन्—न; सुखकाले प्रलयादौ च तदर्थं प्रवृत्त्यदर्शनात्। तेन बहुसुखेच्छयाऽल्पसुखहानिर्युज्यते, न तु दुःखाभावार्थं वैषयिकसुखहानिः। को हि पुरुषार्थभूतसुखहान्या काष्ठवदवस्थातुमिच्छेत्। किञ्च—इतोऽपि न दुःखाभावो मोक्षः। स हि तत्तद्ध्वंससमूहो वा? मिलितप्रतियोगिकमभावान्तरं वा? नाद्यः, समुदायस्य समुदायिभिन्नत्वे जन्यत्वे ध्वंसापत्तेः। अजन्यत्वे वाऽपुरुषार्थत्वात्। नान्त्यः, तादृशध्वंसासिद्धेः। क्रमिकत्वेन मेलकाभावाच्च। न च बुद्ध्यादिनवगुणानां युगपन्नाशस्सम्भवति। तदुक्तं **सुरेश्वराचार्यैः**—

'आत्मादि कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तद्विमुक्तताम्।
न हि स्वभावो भावानां व्यावर्ततौष्ण्यवद्रवेः।। इति।

किञ्चाऽज्ञातस्य दुःखाभावस्यापुरुषार्थत्वादन्धकारनृत्यवद् वाऽसत्त्वापत्तिः। प्रलयमूर्च्छादावपि प्रवृत्त्यापत्तेश्च अज्ञातदुःखाभावसत्त्वात्। ज्ञातस्य तत्त्वे तु जन्यत्वेन मुक्तेरपि नाशापत्तिः। विशेषगुणहीने आत्मनि प्रमाणाभावाच्च। न च 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति 'दुःखेनात्यन्तविमुक्तश्चरति' इति च श्रुतिर्मानमिति वाच्यम्। जीवन्मुक्तस्य देहाभिमानहीनस्य सुखदुःखसम्बन्धाभावबोधकत्वात्। किञ्च दुःखस्याभावो ध्वंसः? अभावान्तरं वा? नाद्यः, दुःखध्वंसो न पुमर्थः। दुःखान्तरोत्पादात्। इदानीन्तनदुःखध्वंसवत्। उत्पन्नस्य विरोधिगुणादिना नाशेनायत्नसिद्धत्वात्। अनुत्पन्नस्य च प्रतियोग्यसत्त्वेनाशक्यत्वात्। नान्त्यः, प्रागभावात्यन्ताभावान्योन्याभावानामनन्यत्वात्। किञ्च दुःखध्वंसस्य आत्यन्तिकत्वं समानाधिकरणदुःखप्रागभावासमानकालीनत्वमिति चेत् न; तत्त्वे मानाभावात् 'दुःखेनात्यन्तविमुक्तश्चरतीत्यस्यात्यन्ताभावपरत्वात्। दुःखसमानकालीनत्वव्याप्तेः। सुखान्तमुक्तौ जीवद्दशायां तत्सत्त्वाच्च। न चोत्पन्नानागतदुःखध्वंसस्यायत्नसाध्यत्वेऽपि तद्धेतुमिथ्याज्ञानोच्छेदार्थं प्रवृत्तिः प्रायश्चित्तवदिति वाच्यम्। हेतोरप्युत्पन्नस्य यत्नं विना स्वत एव नाशात्। अनागतस्य चाशक्यत्वात्। ननु लोके वर्तमानस्यैव दुःखहेतोरहिकण्टकादेर्नाशो यत्नसाध्यत्वं प्रवृत्तिश्च दृश्यते। न च हेतुनाशस्य सुखदुःखाभावेतरत्वादपुरुषार्थत्वम्, दुःखाभावप्रयोजकत्वेन तत्त्वोपपत्तेः। दुःखहेतुसवासनमिथ्याज्ञाननाश एव दुःखाभावशब्देनोच्यते। तदुक्तम्—'हेतूच्छेदे पुरुषव्यापारात्' इति। न च दुःखहेतुनाशजन्यदुःखाभावोऽपि न ध्वंसः, उत्पन्नानुत्पन्नत्वाभ्यां तदयोगात्। न तदन्यः, अनादित्वादिति वाच्यम्। प्रागभावस्या-

जन्यत्वेऽपि उत्तरसमयसम्बन्धित्वेन जन्यत्वोपपत्तेः। दृष्टो हि दुःखहेतुसम्बन्धसत्त्वे प्रागभावनाशः, दुःखोत्पत्तेस्तन्नाशत्वात्। दुःखहेतुनाशे च तत्सत्त्वमित्यन्वयव्यतिरेकाभ्यां कार्यकारणभावः। न चैवं तत्त्वज्ञानस्यैव दुःखप्रागभावपालनं साध्यमस्तु किं हेतूच्छेदेनेति वाच्यम्। तस्य दुःखप्रागभावपालनेऽन्वयव्यतिरेकाभावात्। मिथ्याज्ञानध्वंसे तु तौ स्त इति तस्यैव दुःखाभावप्रयोजकत्वात् साध्यत्वमन्यथा प्रायश्चित्ते का गतिरिति चेत्-अत्र ब्रूमः—न हेतोर्मिथ्याज्ञानस्योच्छेदः साध्यः, तस्य क्षणिकत्वात्। न तज्जन्यवासनायाः, तत्र तत्त्वज्ञानस्यान्वयव्यतिरेकाभावात्। तत्त्वज्ञानेन भ्रमजन्यसंस्कारनाशाभावात्। अन्यथा नेदं रजतमिति तत्त्वज्ञानोत्तरं तद्रजतमिति स्मृतिर्न स्यात्। न स्याच्च सुप्तोत्थितस्य स्वाप्नगजादिस्मृतिः। जागरणे संस्कारनाशात्। न च दुःखप्रागभावोत्तरसमयसम्बन्धः साध्यः,तस्य तत्त्वज्ञानाजन्यत्वात्। भावकार्यत्वेन विनाशापत्तेश्च। प्रायश्चित्ते तु सत एव पापापूर्वस्य नाश इति वैषम्यम्। इहापि हेतूच्छेदे वेदैकगम्या कारणता, न दृष्टवशादिति चेत्—'नित्यं विज्ञानमानन्दं ब्रह्म इति श्रुत्याऽऽनन्दाभिव्यक्तेः साध्यत्वात् क्व दुःखाभाववार्ता ? किञ्च इतोऽपि न दुःखाभावः पुरुषार्थः। प्रागभावस्यासाध्यत्वात्। अथ दुःखोत्पादेन तत्प्रागभावनाशात् दुःखान्तरानुत्पाद इति तन्न; इयतां नाश इति नियन्तुमशक्यत्वात्। एकदा सर्वनिवृत्तौ मानाभावात्। प्रागभावनिवृत्तेः पुंव्यापारासाध्यत्वात् प्रत्युत दुःखोत्पादार्थमेव प्रवृत्त्यापत्तेः।

न च जीवन्मुक्तस्य नानाशरीराणि गृहीत्वा 'प्रारब्धभोगदर्शनादिष्टापत्तिः, अस्य प्रारब्धत्वाभावात्। न च षट्पदार्थतत्त्वज्ञानस्य षोडशपदार्थतत्त्वज्ञानस्य वा मोक्षहेतुत्वे प्रमाणमस्ति, प्रत्यक्षाद्यगोचरत्वात् वेदवाक्यस्य चासत्त्वात्। न च मन्वादिवत् गौतमादिवाक्यमेव प्रमाणम्; हेतुवादेन श्रुतिमूलत्वाभावात्। अन्यथा प्रतिज्ञामात्रेण सिद्धावुद्देशादिवैयर्थ्यात्। 'य इह नानेव पश्यति' 'अथेतरे मृत्युमेवापियन्ति, 'उदरमन्तरं कुरुते, द्वितीयाद्वै भयं भवति' इत्यादि श्रुतिबाधितत्त्वाच्च। अतएव न भेदज्ञानस्य मोक्षहेतुत्वम्। कीदृशश्च पदार्थज्ञानं मोक्षहेतुः ? सामान्याकारं विशेषाकारं वा ? नाद्यः, इदमित्यादिसामान्यज्ञानस्य शुक्तौ भ्रमानाशकत्वात्। नान्त्यः, कालादावात्मभ्रमाभावेन षोडशपदार्थज्ञानस्य वैयर्थ्यात्। देहादौ हि तद्धीः न शब्दादौ। नहि शब्दोऽहमिति धीरस्ति। अतो देहादिभेद एव वाच्यः न षोडशपदार्थभेदः। न हि शुक्तौ रजतभ्रमे वृक्षतत्त्वज्ञानमुपयुज्यते इति दिक्। अस्माकं तु कर्माद्यर्थत्वान्निरूपणं न ज्ञानार्थतया।

अस्तु तर्हि साङ्ख्यमतम्। शुद्धस्य पुरुषस्य प्रकृतितो विवेकनिवृत्तौ प्रकृतेः पुरुषं प्रति चरिताधिकारत्वात् तद्भोगार्थं प्रवृत्त्यभावाद् आधिभौतिकाधिदैविकाध्यात्मिकत्रिविधदुःखस्यैकान्तात्यन्ताभावो मोक्ष इति। पातञ्जलमतं वा। प्रकृतिपुरुषविवेकेन वैराग्यपरिपाकात् यमनियमासनप्राणायामप्रत्याहारधारणाध्ययनरूपसम्प्रज्ञातसमाधिपूर्वकादीश्वरप्रसादात्पञ्चविधचित्तवृत्तिनिरोधरूपादसम्प्रज्ञातसमाधेर्मोक्ष इति। अत्रत्यात्मनो निस्सङ्गत्वाद् दुःख-

स्य च बुद्धिधर्मत्वात् समवायिकारणनाशादेव दुःखध्वंस इति नात्मोच्छेदवार्ताऽपि। न चान्धकारनृत्यता, आत्मनः स्वप्रकाशत्वात्। मैवम्, दुःखस्यासतो नाशासम्भवात्। तद्विलक्षणत्वे चानिर्वचनीयतया वेदान्तिमतापत्तेः। तदुक्तम्–'नासतो विद्यते भावो नाभावो विद्यते सतः' इति। आत्मनोऽसङ्गत्वेन बन्धमोक्षयोरविशेषापत्तेश्च। न च बुद्धिधर्मस्य दुःखस्य तत्सम्बन्धाद्विशेषः। सम्बन्धस्य सत्त्वासत्त्वाभ्यां दुर्निरूपत्वात्। अणिमाद्यष्टविधैश्वर्यप्राप्तिं तु मोक्षमाचक्षाणाः कार्यत्वेन विनाशित्वादेवोपेक्ष्याः। अन्ये तु नित्यकर्मानुष्ठानादागामिकर्माभावात् काम्यनिषिद्धयोरननुष्ठानात् वर्तमानस्य चोपभोगेन नाशात्। ज्ञानेन सर्वकर्मोच्छेद एव मोक्ष इत्याहुः। तन्न; तत्त्वज्ञानासाध्यत्वात् विष्णुभक्तिधर्माचरणात् विष्णुलोकगमनं मोक्ष इति वैष्णवाः। पाशुपतधर्माचरणात् शिवलोकगमनमिति पाशुपताः। पञ्चाग्निविद्याद्युपासनैरर्चिरादिमार्गेण हिरण्यगर्भप्राप्तिरेवेति हैरण्यगर्भाः। तदेतत् त्रयमयुक्तम्। लोकगमनस्य कार्यत्वेन विनाशित्वात्। एतेन सारूप्यसालोक्यसामीप्यलक्षणं मोक्षं प्रत्याचक्षीत। त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदाभेदवादिनः कारणब्रह्मणि कार्यरूपजीवस्य ज्ञानकर्मसमुच्चयात्कर्मवासनायुक्तत्वरूपभेदांशनिवृत्तिर्मोक्ष इत्याहुः। सतरङ्गनिस्तरङ्गसमुद्रभेदवत् सविकारनिर्विकारतया द्विविधस्य ब्रह्मणो ज्ञानकर्मसमुच्चयात्सविकारत्त्वत्यागेन निर्विकारत्वापत्तिर्मोक्ष इति तदेकदेशिनः। तन्न; भेदाभेदयोर्विरोधात्। भेदस्य पारमार्थिकत्वे निवृत्त्ययोगाच्च। किञ्च किं तस्य नाशकम्? ज्ञानञ्चेत् तत्किं भिन्नविषयं भिन्नाभिन्नविषयमभिन्नमात्रविषयंवा? नाद्यौ; ज्ञानस्य ज्ञेयपरिच्छित्तिमात्रफलत्वेन स्वविषयनिवर्तकत्वाभावात्। न तृतीयः, भेदस्य सतो निवृत्त्यभावेन कल्पितत्वापत्तेः। तदुक्तं **पद्मपादाचार्यैः**–'यतो ज्ञानमज्ञानस्यैव निवर्तकम्' इति। ज्ञानान्मिथ्याज्ञानस्य कर्मणा च भेदस्य निवृत्तिरिति चेत्–त्वन्मते मिथ्याज्ञानस्यैवाभावात्। भेदाभेदवादेन सर्वत्र प्रमात्वात्। कर्मणां च क्वापि भेदनिवर्तकत्वादर्शनात्। कर्मजन्यत्वे नित्यत्वस्यातिशयत्वापत्तेश्च।

प्राभाकरास्तु विहितज्ञानकर्मानुष्ठानाद्धर्माधर्मनाशे तद्धेतुवद् देहेन्द्रियादिसम्बन्धस्यात्यन्तोच्छेदो मोक्ष इत्याहुः। तन्न; दुःखाभावस्यापुरुषार्थत्वस्योक्तत्वात् समुच्चयासम्भवाच्च। अस्तु तर्हि मीमांसकमतम्।

तथाहि–ज्ञानकर्मसमुच्चयात् जडबोधात्मकस्यात्मनो नित्ययोर्ज्ञानसुखयोरुद्बोधाज्ज्ञानेन च सुखस्य विषयीकरणात् नित्यसुखाभिव्यक्तिर्मुक्तिरितिभाट्टाः। दुःखाभाव एव मोक्ष इति तदेकदेशिनः पार्थसारथ्यादयः। तत्त्वयुक्तमिति वक्ष्यामः।

ननु सुखमात्मनो भिन्नमभिन्नं वा? आद्ये जन्यमजन्यं वा? नाद्यः, क्षयित्वेनापुरुषार्थत्वात्। नान्त्यः, ज्ञापकाभावात्। स्वप्रकाशत्वे ह्येतत्स्यात्। नतु तदस्ति। ज्ञेयत्वेन जडत्वात् अनङ्गीकाराच्च। न च मोक्षे मनस्संयोगाभावेना-

वेद्यस्य पुमर्थत्वम्, परसुखेऽपि तत्त्वापत्तेः । न चेन्द्रियादिसम्भवः, मुक्तसंसारिणोरविशेषापत्तेः । नित्यसुखसत्वे च संसारे तस्य कुतो नोपलम्भः । आवरणसत्वादिति चेत्—न; तस्यापि भिन्नाभिन्नसत्वासत्वैर्दुर्निरूपत्वात् । अविद्याभ्युपगमे वेदान्तिमतापत्तेः । एतेनात्मभिन्नं सुखमिति परास्तम् । संसारेऽप्युपलम्भापत्तेश्चेति चेन्मैवम्, नित्यज्ञानेनैव सुखस्य विषयीकरणादभिव्यक्तिसिद्धेः । न च संसारे आवरणस्यासम्भवः, सतैव कर्मदेहमिथ्याज्ञानादिना आवरणात् । न च ज्ञानकर्मसमुच्चयासम्भवः, प्रमाणसिद्धत्वस्योक्तत्वात् । ननु केयमभिव्यक्तिः ? न तावज्ज्ञानम् । तद्धि नित्यं जन्यं वा ? नाद्यः, मुक्तसंसारिणोरविशेषापातात् । तत्र संसारस्य प्रतिबन्धकत्वान्नाभिव्यक्तिरिति चेत् एवं हि ज्ञानविषयकज्ञानाभावादिति स्यात् । ततश्चानवस्था । ज्ञानस्य स्वप्रकाशत्वे तु संसारेऽप्यनुभवप्रसङ्ग इत्युभयतः पाशारज्जुः । नान्त्यः, भावकार्यध्वंसेन मुक्तस्यापि संसारापत्तेः । किञ्च नित्ये सुखे किं प्रमाणम् ? 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिरिति चेत्—न; अनया वैषयिकेण सुखेन भेदो बोध्यते सुखान्तरेण वा ? नाद्यः, तस्य प्रत्यक्षेणैव विनाशित्वोपलब्धेः । न च वैषयिकमेव तत्र तत्राभिव्यज्यत इति वाच्यम् । अल्पं सुखं महत्सुखमिति तारतम्यानुपपत्तेः । न ह्यभिव्यक्तौ तारतम्यमस्ति । नान्त्यः, तद्धि प्रमाणान्तरसिद्धमुत श्रुतिसिद्धं वा ? नाद्यः, अनुपलब्धेः । नान्त्यः, ब्रह्माभेदबोधिकया श्रुत्या सुखनित्यत्वबोधने वाक्यभेदापतेः । आनन्दं ब्रह्मणो रूपमिति षष्ठीश्रुत्या ब्रह्मसुखयोरभेदबाधाच्च ।

वस्तुतस्तु अहं सुखीति प्रतीयमानभेदयोर्ब्रह्मसुखयोरभेदोऽशक्य एव बोधयितुम् । न च ब्रह्माभेदानुपपत्त्या नित्यसुखसिद्धिः । अन्योन्याश्रयापत्तेः । 'दुःखेनात्यन्तविमुक्तश्चरतीति च श्रुत्या दुःखाभावरूपत्वमेव मुक्तेर्युक्तं प्रतीमः । तत्कथं सुखात्मकत्वमुक्तम् ?

अत्र वदामः—देहादिभिन्नं नित्यं ब्रह्म तावदुभयवादिसिद्धम् । तस्य च सुखाभेदमात्रमनया बोध्यत इति कुतो वाक्यभेदः ? नित्यसुखमसिद्धमिति चेत्—न, ब्रह्मणस्सुखाभेदबोधनेन सुखस्यापि नित्यत्वसिद्धेः । न चेतरेतराश्रयः, ब्रह्माभेदादेव नित्यसुखसिद्धेः । किञ्च—स हि उत्पत्तिप्रतिबन्धको ज्ञप्तिप्रतिबन्धको वा ? नाद्यः, सुखस्य नित्यत्वात् । नान्त्यः, अभेदेनैव नित्यसुखधीसिद्धेः । यथाहि विशिष्टविध्यनुपपत्त्या विशेषणविधिकल्पनं तथा सुखाभेदानूपपत्त्या सुखस्य नित्यत्वं केन वार्यत ? यदि हि सुखजातीयं किमपि लोके प्रसिद्धं न स्यात् तदाऽन्योन्याश्रयस्स्यात् । इह तु क्लृप्तसुखजातीयस्याभेदो बोध्यते । तत्र वैषयिकस्य बाधात् नित्यमेव सिध्यति । क्षित्यादि सकर्तृकत्वानुमानेनेव कर्तुर्नित्यज्ञानादिमत्त्वम् शिरोमणिनाऽप्येवमुक्तम् । 'न वा अरे पुत्राणां कामाय' इत्यादिश्रुत्या प्रेमास्पदत्वेनात्मनः सुखरूपत्वात् । न चाहिकण्टकादिवत् द्वेषसुखयोरात्मोपाधिकत्वात् आत्मनो दुःखित्वप्रसङ्ग इति वाच्यम्, श्रुत्याऽऽत्मनस्सुखरूपत्वावगतेः । न च तुल्यव्यक्तिकत्वादात्मत्वसुखत्वयोरभेदः, वैषयिकस्य भेदात् । न च 'सर्वं खल्विदं ब्रह्म'

इति श्रुत्या दुःखस्यापि सुखरूपात्माभेदात् दुःखेऽपि सुखत्वापत्तिः। कल्पना (अध्यस्त) त्वेन घटादिवन्मिथ्यात्वात्। न च सिद्धार्थे कथं प्रमाणं श्रुतिरिति वाच्यम्, ज्ञानविध्यपेक्षितत्वेन स्वर्गार्थवादवत्प्रामाण्यात्। न च पूर्वोक्तषष्ठीश्रुति बाधः, रूपशब्दस्य स्वरूपपरत्वात्। न च स्वप्रकाशत्वे संसारेऽप्यनुभवप्रसङ्गः, उक्तोत्तरत्वात्। न च स्वप्रकाशस्य कथं प्रतिबन्ध इति वाच्यम् बाधकाभावात्। या तु दुःखाभावबोधिका श्रुतिः सा सुखरूपत्वेऽप्युपपन्ना।

ननु दुःखाभावोऽप्यावश्यकश्चेत् कुतस्तस्यैव मुक्तित्वं निराक्रियते? उच्यते— पूर्वोक्तन्यायश्रुतिविरोधात्, दुःखाभावस्यापुरुषार्थत्वोक्तेश्च। विस्तरस्तु **मत्कृत-वार्तिकटीकायां** ज्ञेयः। तस्मात्सिद्धं नित्यसुखाभिव्यक्तिर्मुक्तिरिति।

तत्त्वतस्तु अस्माकं मोक्षो वेदान्तिमतादभिन्न एव। तदुक्तं व्याकरणाधिकरणे भट्टपादैः 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते' इत्यात्मनः परमात्मप्राप्त्यवस्थाफलवचनं नार्थवादः' इति। (तं. वा. पृ. २८८) स ब्रह्मोपासको यावदायुषमेवंविधां वृत्तिमाचरन् ब्रह्माभिसम्पद्यते इति श्रुतेश्च। संसारिरूपशरीरसम्बन्धोपाधिकत्वेन परमानन्दात्मकपरमात्मप्राप्तेस्संसारिनिज-रूपावस्थानस्याजन्यत्वादपुनरावृत्तिर्युक्तैव इत्यादिका न्यायसधाऽप्यत्रानुसन्धेया। तर्कपादेऽप्युक्तम्—

'निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः।
यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥' इति
इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
'दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन' ॥ इति।

**पार्थसारथिमिश्रास्तु**—आनन्दात्मकमोक्षवार्तिकं परमतम्, दुःखाभावत्वमेव स्वसिद्धान्तः, उपपत्तेः। तथाहि वार्तिके—

'सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते।
स्वर्ग एव भवेदेषः पर्यायेण क्षयी च सः ॥
न हि कारणवत्किञ्चिद् अक्षयित्वेन गम्यते।
तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ॥
न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्।
न च क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये।
उत्तरप्रचयासत्वात् देहो नोत्पद्यते पुनः ॥' (श्लो. वा. पृ. ४७५)

इति सुखात्मत्वं दूषयित्वा दुःखाभावत्वे युक्तिरुक्ता। किञ्च सुषुप्तेर्मुक्तिसाम्यं निर्विवादम्। 'ता एताः प्रजा अहरहर्ब्रह्मलोकं यन्ति' इति श्रुतेः। नच तत्र सुख-लेशानुभवो युक्तः। नच सुखधीर्युक्ता, कारणाभावात्। न हि मनोऽस्ति। 'अमनो-ऽवाक्' इति श्रुतेः। न च नित्यं स्वप्रकाशं सुखम्, संसारेऽनपपत्तेः। न चाभिभवः,

प्रकाशमाने तदसम्भवात्। सम्भवे वा तदभावस्य जन्यस्य कारणाधीनत्वापत्तेः। न चेन्द्रियादि तदाऽस्ति। न मे सुखलेशः किन्तु दुःख्येवाहमिति सुखाभाव दुःखयोरनुभवाच्च। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतौ सुखनिषेधाच्च। न च वैषयिकस्य निषेधः, अविशेषात्। यत्तु 'न विज्ञातुर्विज्ञाते र्विपरिलोपो विद्यते' इति, तत् ज्ञानशक्तिपरम्। अन्यथा सुषुप्तावपि ज्ञानापत्त्या प्रत्यक्षविरोधात्। न चात्र ज्ञानसत्तोच्यते, किन्तु शक्तिसत्ता। अत्र हि 'न द्रष्टु र्दृष्टेर्विपरिलोपो विद्यते, न घ्रातुर्घ्रातेः न श्रोतुः श्रुतेः, न स्प्रष्टुः स्पृष्टेः, न ज्ञातु र्ज्ञातेः' इत्यादिदृष्टिघ्रात्यादिशब्दैश्चाक्षुषादिज्ञानविशेषा बोध्यन्ते। न चैषां मोक्षेऽनुवृत्तिः, शक्तिस्तु तदाप्यस्तीति तदभिप्रायमिदम्। ज्ञातिश्चानुमानादिज्ञानम्, इन्द्रियजन्यानां तच्छब्दैरुक्तेः। यच्च 'विज्ञानं ब्रह्म विज्ञानघनः' इति तदपि शक्तिपरम्। तथाहि 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति भूतेन्द्रियनाशात् नष्ट इव। अतो 'न प्रेतस्य संज्ञाऽस्ति' इत्युक्ते आह मैत्रेयी 'अत्रैव मा भवान् अमूमुहः, विज्ञानघनः न संज्ञेति अविनाशी वा अरे इति विनश्यति च विरुद्धोक्तेरित्युक्ते उत्तरमाह—'न वा अरे मोहं ब्रवीमि अलं वा अरे इदं विज्ञानाय' इति। आत्मतत्त्वं सदा विज्ञानाय समर्थम्। अतः शक्तिरस्त्येवेति न विरोध इत्यर्थः। तथा 'मात्रासंसर्गस्त्वस्य भवति' इति भूतेन्द्रियसम्बन्धनाशान्नष्ट इवेति नेदं भूतचैतन्यपरम्। एवं सर्वा ज्ञानश्रुतयः शक्तिपरा ज्ञेयाः। शक्तिसत्त्वे कुतो न ज्ञानमिति चेत्, इन्द्रियविषयादिहेत्वभावात्। तदाह—'यत्र हि द्वैतमिव भवति तदेतर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इति। अर्थान्तरज्ञानेऽप्यात्मानमेव जानात्वत उक्तम् 'विज्ञातारमरे केन विजानीयात्' इति। साधनवैकल्यान्न तद्ध्यानमपीत्येव ज्ञानाभावः शक्तिमात्रं च सिद्धम्। ननु आत्मैव ज्ञानानन्यरूपः 'विज्ञानं ब्रह्म आनन्दं ब्रह्म' इति श्रुतेः। नैवम्, सुषुप्तौ अन्य स्याभानात्। विषयसुखभिन्नसुखाप्रसिद्धेश्च। आत्मरूपवाचित्वे च वृद्ध्यादिवत् परिभाषापत्तेः। दुःखदशायां चात्मानुभवो न स्यात्, तस्यानन्दाभिन्नत्वात्। संसारेऽप्यानन्दात्मभाने मुक्तेरविशेषाच्च। अतो विज्ञानमित्यादि धर्मधर्मिणोरभेदान्नीलोत्पलादिवन्नेयम्। नन्वेते नीलादिवत् न गुणिवचनाः, सत्यं न सदा, कदाचित्तु भवन्ति। यथा शीतो मधुरो रस इति रसशब्दो द्रव्यवाची 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति मत्वर्थीयात् 'आनन्दं ब्रह्मणो विद्वान्' 'स एको ब्रह्मण आनन्दः' इति भेदनिर्देशाच्च। न च ब्रह्मणो रूपमितिवद्वाच्यम्, मानाभावादित्याहुः। तदुक्तं शास्त्रदीपिकायाम्—

तेनाभावात्मकत्वेऽपि मुक्तेर्नापुरुषार्थता।
सुखदुःखोपभोगो हि संसार इति शब्द्यते॥
तयोरनुपभोगं तु मोक्षं मोक्षविदो विदुः।

तथा

न ह्यप्रकाशनं युक्तं स्वप्रकाशस्य वस्तुनः ।
यद्यसौ न प्रकाशेत किं तर्ह्यन्यत्प्रकाशते ॥
आत्मस्वरूप इति चेत् ननु चानन्द एव तत् । इत्यादि ।

अत्र ब्रूमः—न तावद्दुःखानां वर्तमानानामतीतानां नाशः । नापि प्रागभाव-पालनम्, न वा हेतूच्छेदः साध्य इत्युक्तम् । परिशेषात् सुखरूपत्वम् । कथं तस्य साध्यत्वम् ? विनाशापत्तेरिति चेत् प्रतिबन्धापगमात् साध्यत्वमित्यवेहि ।

यत्तु संसारादविशेष इति, तन्न; प्रतिबन्धतदभावाभ्यामेव विशेषात् । प्रतिबन्धकं तु अनाद्यविद्यामिथ्याज्ञानं चेत्यन्यदेतत् । नित्यत्वमुक्तत्वश्रुतेश्च विमुक्तश्च विमुच्यते''अत्र ब्रह्म समश्नुते' 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' इति । 'आत्मनस्तु कामाय सर्वं प्रियं भवति, इति प्रियत्वश्रुतेश्च सुखरूपः । स्पष्टञ्च छान्दोग्ये 'तरति शोकमात्मवित्' इति । ज्ञानोच्छेदकरूपसंसारनिवृत्ति-मुक्त्वा 'सुखन्त्वैव विजिज्ञासितव्यं सुखं भगवो विजिज्ञासे, यो वा भूमा तत्सुखम्, नाल्पे सुखमस्ति, भूमानं भगवो विजिज्ञासे, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्य-द्विजानाति स भूमा' इति । अहङ्कारादेशमात्मा जीवरूपदेशं चोक्त्वा भूमासुख-रूप उक्तः । 'यदेष आकाश आनन्दो न स्यात्' 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यादौ सहस्रशः सुखत्वमुक्तम् । यत्तु 'आनन्दी भवति' इति तदपि च्विप्रत्य-यान्तम् । यत्तु 'आनन्दं ब्रह्म' इति तत्र आनन्दशब्दो नपुंसकं 'तानि धर्माणि' इतिवत् विशेष्यलिङ्गं वा । यत्तु सुषुप्तौ न सुखलेश इति, तत् 'सुखमहमस्वाप्सम्' इत्यनुभवपराहतम् । न चैतद्दुःखाभावपरं गौणम्, गौणत्वे मानाभावात् । यत्तु कान्तासङ्गाभावे निद्रया वृथा रजनी नीतेति निर्देशो न स्यात् ततोऽधिकस्यात्म-सुखस्यानुभवादिति, तत् कान्तासङ्गादधिके दुःखाभावे मोक्षे प्रवृत्तिवत् तथापि निद्रायां प्रवृत्त्यापत्त्या कान्तासङ्गे प्रवृत्तिर्न स्यादिति तुल्यम् । तस्मान्नित्यसुख ज्ञानात्मनः स्वरूपावस्थानं मुक्तिः । अभावमुक्तिवादस्तु परमतमिति राणकादि क्षुण्णस्सिद्धान्तः । **पार्थसारथिस्तु वेदान्ताध्ययनशून्यो भ्रान्त एव ।**

ननु परमात्मप्राप्तेर्मोक्षत्वे कथं वार्तिके नानात्मवाद उक्तः ? तदुक्तम् अपूर्वाधिकरणे—'अहंप्रत्ययेन हि चैतन्यस्वभावस्य आत्मनोऽस्तित्वमात्रमव-गम्यते, सर्वेषां चैतन्यात्मकत्वाद्यविभागादुपनिषत्स्वैकात्म्यव्यवहारः' इत्यादि ।

अत्र केचिदाहुः—आत्मभेदेऽपि प्रतिद्रव्यं शुक्लादिवत् गुणभेदाभावात् सम-वायाभावाच्च तादात्म्येन सर्वेषां सुखज्ञानात्मकत्वम् । तेन भेदेऽपि स्वरूपप्राप्तिरे-व मोक्षः । ऐकात्म्ये ह्येकाविद्यापक्षे शुकादीनामनिर्मोक्षः, प्रवृत्त्यभावश्च । नाना-विद्यापक्षे 'देवात्मशक्तिं' अजामेकाम्, इत्यादिश्रुतिबाधादिति तत्त्वं तु सामान्ये-नैक्याद्भेदस्य च जीवपरत्वादैकात्म्यमेव राणकमतमिति । यत्तु—क्रत्वर्थकर्तृ प्रति-पादकत्वमुपनिषदामाचार्यैरर्थवादपादे उक्तम्, तदपि सगुणात्मप्रतिपादकानामेव । निर्गुणात्मबोधकानान्तु मोक्षार्थत्वमेवेति राणकः । अत्र ज्ञानसुखात्मनां तादात्म्य-

मेव, वस्त्वनेकान्तवादाच्च द्रव्यबोधात्मक आत्मेति प्रवादः। निरतिशयत्वं च सजातीयव्यापकान्योन्याभावाप्रतियोगित्वमिति।

अत्र कश्चिदाह—दुःखसन्ततिः अत्यन्तोच्छेदप्रतियोगिनी सन्ततित्वात् प्रदीपसन्ततिव( इत्यनुमानेन सर्वमुक्तिरस्तीति। तदेतत् शिष्यधीबम्भ्रणम्। सादिभावत्वस्योपपादितत्वात्, अप्रयोजकत्वा(। दुःखसन्ततिर्नात्यन्तमुच्छेदिनी; अनादित्वात् आकाशवत् व्यतिरेकेण घटवद्वेति सत्प्रतिपक्षाच्च। न च मूलानुवृत्तिरुपाधिः। आकाशेऽत्यन्तमुच्छेदाभावस्य सत्त्वेन मूलानुवृत्तेश्च सत्त्वेन साध्याव्यापकत्वात्। पार्थिवपरमाणुरूपसन्ततौ अनादित्वसत्त्वेन मूलानवृत्तेश्च सत्वेन साधनव्यापकत्वाच्चेति सङ्क्षेपः।

इति कमलाकरभट्टकृते मीमांसाकुतूहले मोक्षवादः

## द्रव्यलक्षणम्

तत्र गुणाश्रयो द्रव्यम्। ननु न गुणाश्रयत्वं द्रव्यत्वम्। एकं बहूनि वा रूपाणि, अयमपरो गन्ध इत्यादिप्रतीतेर्गुणेऽपि तत्सत्त्वात्। न चायं भ्रमः, वैपरीत्यापत्त्या घट एव गुणाभावापत्तेः। न च गुणसत्त्वेऽनवस्था, उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावेन तस्या अदोषत्वात्। अत्रोच्यते—न गुणे गुणः, द्रव्यगणैरेव व्यवहारोपपत्तेः। न च वैपरीत्यम्, घटे गुणप्रतीतेः प्राथम्येनोपजीव्यत्वात्, अनवस्थापत्तेश्च। न च तस्या अदोषत्वम्, गुणाश्रयत्वज्ञानं विना द्रव्यज्ञानासम्भवेन ज्ञप्तिप्रतिबन्धकत्वा(।

ननु परम्परासम्बन्धेन सम्बन्धसामान्येन वा गुणाश्रयत्वं गुणेष्वप्यस्तीति सम्बन्धविशेषेण तद्वाच्यम्। स च विशेषो न समवायः,तस्यैकत्वेन गुणेष्वपि तत्सत्त्वेन द्रव्यत्वापत्तेः। न संयोगः, रूपे तदभावात्। न स्वरूपसम्बन्धः, स्वरूपस्य तत्रापि सत्त्वेन दोषतादवस्थ्या(। मैवम्; तादात्म्येनोपपत्तेः। न च गुणे तदस्ति। [1]रूपस्य सङ्ख्यात्मकत्वे गुणानां सङ्करापत्तेः। व्योम्नि सङ्ख्यानापत्तेः, सङ्ख्यायां रूपापत्तेश्च।

## द्रव्यविभागः

तानि च द्रव्याणि—पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनश्शब्दतमांस्येकादश। ननु न शब्दस्य द्रव्यत्वं युक्तम् गुणत्वात्। तच्च सामान्यवत्वे सति

१. गुणस्यापि तादात्म्यसंबन्धेन गुणाश्रयत्वाङ्गीकारे क्रमेण दूषणत्रयमाह रूपस्येत्यारभ्य रूपापत्तेश्चेत्यन्तेन।
एकं बहूनि वा रूपाणि इत्यत्र यदि आधेयभूताया एकत्वादिसंख्याया अपि आश्रयभूतगुणतादात्म्यमङ्गीक्रियेत तदा आकाशस्य नीरूपत्वात् तदन्तर्भावेण रूपसंख्ययोरसामानाधिकरण्यं पृथिव्याद्यन्तर्भावेण च सामानाधिकरण्यं चेति गुणसाङ्कर्यापत्तिः। अत्र द्वयोस्सामानाधिकरण्यं असामानाधिकरण्यं च यत्किञ्चिदन्तर्भावेण विद्यत इति

बाह्यैकेन्द्रियग्राह्यत्वात्। नैतत्, [1]वायावेव व्यभिचारात्। वायोः प्रत्यक्षत्वञ्च वक्ष्यामः। गुणाश्रयत्वाभावान्नेति चेन्न; सङ्ख्यादीनां सम्भवात्। रूपादीनामपि तर्हि द्रव्यत्वापत्तिरिति चेन्न, वैषम्यात्। रूपादीनां ह्याश्रय नैयत्येन प्रतीतेर्न द्रव्यत्वम्। शब्दस्य तु भेर्यवच्छिन्नदेशातिरेकेणापि प्रतीतेः केवलभेर्यां केवलदण्डे चाप्रतीतेर्न तावत्तयोर्गुणः। नाप्याकाशस्य; दिग्गुणत्वप्रतिबन्ध्या दुरुद्धरत्वात्। तस्या विशेषगुणविरहान्नैवमिति चेत्, आकाशस्यैव विशेषगुणविरहं मन्यमानं प्रति मूकत्वापत्तेः। तस्माद्विनिगमनाविरहात् द्रव्यत्वमेव युक्तम्। **यथाहुराचार्याः**—

वर्णात्मकास्तु ये शब्दाः नित्यास्सर्वगताश्च ये।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः॥ इति।

यदपि 'आकाशेऽवस्थितःशब्दः संस्कर्तुं शक्यते कथम्।
नित्यत्वान्मूर्त्यभावाच्च व्योमाश्रितविभुत्ववत्॥'

इति **व्याकरणाधिकरणे आचार्यै**र्व्योमाश्रितत्वमुक्तम्, तद्वैयाकरणमतेनेति **भट्टसोमेश्वरै**र्व्याख्यातम्। अत एव कर्त्रधिकरणे 'सर्वशब्दानामनधिकरणत्वात्' इति च वार्तिकं मीमांसकमते शब्दस्य द्रव्यत्वेनानाश्रयत्वादिति **राणके** व्याख्यातम्।

## तमोनिरूपणम्

अत्र कश्चिदाह—तमसो भावत्वमेवासिद्धम्, कुतस्तरां द्रव्यत्वम्। न हीदं सामान्यम्, कादाचित्कत्वात्। किञ्च नेदं द्रव्यवृत्तिसामान्यम्। तद्धि व्याप्यवृत्ति, अव्याप्यवृत्ति वा? नाद्यः, तत्र द्रव्यत्वसत्तातिरेकेण व्याप्यवृत्तिजातेरभावात्। नान्त्यः, आश्रयव्यक्त्यप्रतीतौ प्रतीयमानत्वात्। नापि गुणकर्मवृत्ति, तदवृत्तितया प्रतीतेः। न विशेषसमवायौ, प्रत्यक्षत्वादनित्यत्वात्सम्बन्धत्वेनाप्रतीतेश्च। न गुणकर्मणी, द्रव्याश्रितत्वाभावात्। तमसश्च तदाश्रितत्वेनाप्रतीतेः। अप्रयोजकत्वे तु सामान्यवत्त्वे द्रव्यान्तरापत्तिः। निस्सामान्यस्य च गुणत्वव्याघातः। नापि द्रव्यम्, तद्धि न पृथिव्यादित्रयम्, स्पर्शविरहात्। तेषाञ्चोद्भूतरूपाणामुद्भूतस्पर्शनियमात्। नापि वाय्वादिसप्तकम्, रूपवत्त्वात्। न च रूपक्रियापरिमाणपरत्वापरत्वविभागादिमत्त्वात् द्रव्यान्तरत्वम्, तेषां भ्रान्त-

---

तन्मात्रेण गुणानां साङ्कर्योक्तिः। न तु 'परस्पर' इति विशेषणघटितत्वेनेति विज्ञेयम्। आकाशे वस्तुत एकत्वसंख्यासत्वेऽपि संख्याया रूपतादात्म्याङ्गीकारे तत्र च रूपाभाव इव संख्याया अप्यभावापत्तिरिति भावः।
यथा संख्या रूपे वर्तते तथा संख्यायामपि रूपापत्तिः, संख्यायां रूपतादात्म्यस्वीकारादित्याशयः।

1. वायोर्द्रव्यत्वं तावद् सम्प्रतिपन्नमेव। तस्य च वायुत्वद्रव्यत्वरूपसामान्यवत्वे सति-बाह्यत्वगिन्द्रियमात्रग्राह्यत्वात् गुणत्वसाधकत्वेन त्वदुक्तहेतुर्वायावन्तर्भावेण व्यभिचरित इति भावः।

त्वात्। तर्हि तमसि वास्तवं रूपादिकं सम्भवति। आलोकनिरपेक्षचक्षुर्गोचरत्वात्। विषयातिरिक्तत्वस्य चातन्त्रत्वात्। किञ्च—एतद्द्रव्यं सत् सावयवं स्यान्निरवयवं वा ? नाद्यः; अनारब्धत्वात्। तच्च स्पर्शरहितद्रव्यत्वात् व्योमवत्। नान्त्यः; निरवयवस्य रूपवतः परमाणुतयाऽतीन्द्रियत्वापत्तेः। क्रियावत्वं तु भ्रान्तम्, महत्वे सति स्पर्शरहितद्रव्यत्वात्, आवारकद्रव्यानुविधानाच्च। एवं परिमाणविभागपरत्वापरत्वसंयोगादिमत्वमपि। ननु यावद्विशेषबाधादभावत्वमपि न युक्तम्। तथाहि—न तावत्प्रागभावात्यन्ताभावौ, उत्पन्नादिव्यवहारात्। न ध्वंसेतरेतराभावौ, विनाशादिप्रत्ययादिति चेन्मैवम्; प्रौढप्रकाशक यावत्तेजस्संसर्गाभावस्य तत्वात्। नव्यास्तु—तेजस्सामान्याभाव एव तमः। यावत्पदञ्चानेकाशेषपरम्। तस्माद्भावत्वमेव तमसोऽसिद्धम्, कुतस्तरां द्रव्यत्वमिति पूर्वपक्षसङ्क्षेपः।

## तमसोऽभावातिरिक्तत्वसाधनम्

अत्रोच्यते—यदि तमो यावत्तेजस्संसर्गाभावरूपं स्यात् बहलतरं बहलतमं नीलं नीलतरमिति तारतम्यं न स्यात्। तद्धि तेजोऽनुप्रवेशाननुप्रवेशकृतम्। नहि तेजोऽनुप्रवेशो यावत्वं सम्भवति। छायादौ यावत्तेजोऽभावाभावेनाव्याप्तेश्च। यदि तमस्तेजोऽभावः स्यात् रत्नादिषु तेजस्सामानाधिकरण्येन छायाधोर्न स्यात्। किञ्च—

'रश्मिरग्निरजच्छाया गौरश्वो वसुधाऽनिलः।
विप्रुषो (तुषारो)मक्षिकास्पर्शे वत्सप्रस्नवने शुचिः॥

इति स्मृतिषु छायायाः शुचित्वम्, चण्डालच्छायायाश्चाशुचित्वमुक्तम्। तच्च—

'युगं च द्वियुगं चैव त्रियुगं च चतुर्युगम्।
चण्डालसूतिकोदक्यापतितानामधः क्रमात्॥

इत्यादिवचनैश्चेतनाचेतनव्यवस्थया च मूर्तद्रव्यत्वस्य स्पर्शदोषजनकतावच्छेदकत्वे घटते। छायारूपस्य तमसोऽभावत्वे तत्सम्बन्धस्याशुचित्वानापादकत्वात्तन्निवृत्त्यर्थं शुचित्वाभिधानं व्यर्थं स्यात्। न ह्यभावस्याशुचित्वं प्राप्तं येन शुचित्वं वाच्यं स्यात्। यदि वा एकत्र पुनर्वचनं परिसङ्ख्यार्थमिति न्यायेन तेजोऽभावस्य शुचित्वोक्त्या घटाद्यभावानां सर्वदाऽशुचित्वापत्तिः। चण्डालादिच्छायायाश्च द्रव्यत्वाभावे तत्सम्बन्धादशुचित्वं न स्यात्।

यस्तु छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति।
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति॥ इति

कथमस्पर्शस्य रूपत्वमारब्धत्वं चेति चेत्–शृणु !

यथा वायोरन्यत्र स्पर्शवद्द्रव्यस्य रूपवत्वनियमेऽपि वायोः स्पर्शवत्वाक्षतिः, यथा वा धूमादन्यस्य स्पर्शवद्द्रव्यस्य चक्षुःप्रदेशादन्यत्रोपलभ्यमानस्पर्शवत्वनियमेऽपि धूमस्य चक्षुः प्रदेश एवोपलभ्यमानस्पर्शवत्वमिति भङ्गस्तथा निस्पर्श-

त्वेऽपि तमसो रूपवत्वं किं न स्यात्। न हि नीरूपत्वे निस्पर्शत्वं प्रयोजकम्, विपक्षे बाधकाभावात्। अन्यथा वैपरीत्यस्य सुवचत्वेन वायौ नीरूपत्वेन निस्पर्शत्वानुमानापत्तेः। न च प्रत्यक्षेण वह्निरनुष्ण इतिवद्बाधान्नानुमानमिति वाच्यम्, प्रकृतेऽपि तुल्यत्वात्। भ्रान्तत्वकल्पनाया उभयत्र तुल्यत्वात्। तस्माद्यथा निस्पर्शत्वे नीरूपत्वं न प्रयोजकं तथा नीरूपत्वे निस्पर्शत्वमपि न प्रयोजकमित्यास्ताम्।

ननु तमो यदि रूपिद्रव्यं स्यात् आलोकनिरपेक्षचक्षुर्ग्राह्यं न स्यात् इति चेत्, अत्र ब्रूमः--यथा रूपवदभावस्यालोकसापेक्षचक्षुर्ग्राह्यत्वनियमेऽप्यालोकाभावे तत्त्यागः, एवमत्रापीत्यदोषः। नन्वालोके आलोकापेक्षाभावात्तदभावग्रहेऽपि नालोकापेक्षा, योग्यानुपलब्ध्या ह्यभावग्रहः, प्रतियोगितद्व्याप्येतरयावत्प्रतियोगिग्राहकसामग्रीसमवधानं च योग्यता। आलोकाभावग्रहे चालोकस्य प्रतियोगित्वेन तत्सत्वे योग्यताविरहादिति चेत्, न; आलोके आलोकापेक्षाभावे [1]त्वदुक्तव्याप्ते स्तत्रैव व्यभिचारात्। अथ तत्राप्यस्त्येवावयवरूपालोकापेक्षेति चेत्, तर्ह्यवयवभूतालोकस्य प्रतियोगितद्व्याप्येतरत्वात् कथं तेन विना आलोकाभावग्रहश्चक्षुषा स्यादित्युभयतः पाशारज्जुः। एतेनैतदपास्तम्--यत् चाक्षुषज्ञानत्वेनालोकत्वेन कार्यकारणभावः। न चालोके व्यभिचारः, तत्रापि विषयस्य तदवयवभूतस्य वालोकस्य सत्त्वादिति, आलोके हि विषयत्वेन कारणता न त्वालोकत्वेन। अवयवस्य च प्रतियोगीतरत्वेन रूपवदभावग्रहे कारणत्वापत्तेरिति दिक्। एवमनारब्धत्वेऽप्यस्पर्शवत्वं न प्रयोजकं, [2]रूपादौ व्यभिचारात्, [3]अकारणकत्वस्य व्योमादौ साध्यव्यापकत्वेन प्रथमक्षणे घटादौ रूपादौ च साधनाव्यापकत्वेनोपाधित्वाच्च। [4]प्रथमक्षणभिन्नत्वेन विशेषणे [5]एतद्भिन्नत्वेन विशेषयितुः को वारयिता ? तमः आरब्धं महत्वे सति रूपवत्वादिति सत्प्रतिपक्षाच्च। नचासिद्धिः, बहलतरबहलतमादिप्रत्ययैस्तस्याङ्गीकर्तव्यत्वात्। न चैतस्य भ्रान्तत्वम्। भ्रमपरम्पराकल्पनापेक्षया वरं तवैव भ्रान्तत्वम्। न च रूपवत्वमन्तरेण तरतमादि

---

१. रूपिद्रव्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वाभावयोर्या व्याप्तिरुक्ता तस्याः आलोकान्तर्भाविण व्यभिचारः, आलोकस्य भास्वररूपवत्वेन रूपिद्रव्यत्वे सत्यपि तस्य आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात्, तदभावस्य अभावात् इति भावः।

२. अनारब्धत्वाभाववति रूपादौ अस्पर्शत्वरूपहेतोस्सत्त्वाद् व्यभिचार इत्याशयः।

३. तमः अनारब्धं अस्पर्शत्वात् इत्यनुमानं सोपाधिकम्, तत्र अकारणकत्वमुपाधिः, तस्य व्योमान्तर्भाविण साध्यव्यापकत्वम्, उत्पत्तिक्षणावच्छिन्नघटादिजन्यद्रव्यान्तर्भाविण रूपाद्यन्तर्भाविण वा साधनाव्यापकत्वं च विद्यत इति अभिप्रायः।

४. प्रथम (उत्पत्ति) क्षणभिन्नक्षणावच्छेदेनेति अस्पर्शत्वरूपहेतौ विशेषणनिवेशे इत्यर्थः।

५. एतद्भिन्नत्वेन--तमोभिन्नत्वेनेत्यर्थः। तथा च तमोभिन्नं किंचित् द्रव्यम् अनारब्धं निरुक्तविशेषणावच्छिन्नास्पर्शत्वात् यथा व्योम इति पक्षकोटौ तमोभिन्नत्वनिवेशात् न तमसोऽनारब्धत्वं सिद्ध्यतीति गूढाभिसन्धिः।

प्रत्ययः, गुणकर्मणी विहाय तस्यासम्भवात्। अरूपत्वेन वायावस्पर्शत्वापत्तेश्च। न चालोकानपेक्षचाक्षुषत्वात् ⁶तदसम्भवः, आलोके तदविशेषात्। न च तत्रावयव रूपालोकापेक्षेति युक्तम्, संयोगेनैवालोकस्य विषयधीहेतुत्वात्। समवायतदन्यतरत्वे वाऽननुगमात् समवायस्यायुतसिद्धगर्भत्वेन गुरुत्वान्निरस्तत्वाच्च। तस्माद्युक्तस्सत्प्रतिपक्षः। किञ्च तेजोऽभावं तमो वदन् प्रष्टव्यः—किं प्रागभावो ध्वंसोऽन्योन्याभावोऽत्यन्ताभावस्सामान्याभावो वा? तत्रापि यत्किञ्चिदालोकस्य यावदालोकस्य वा? नाद्यौ; सौरालोके प्रदीपोत्पत्तिविनाशयोः प्राग्ध्वँ च तमोबुद्ध्यापत्तेः। अत एव न तृतीयचतुर्थौ। यावदालोकाभावश्चेत् यत्किञ्चिदालोकसत्वे यावदालोकासत्त्वान्न तमोबुद्धिस्स्यात्। न पञ्चमः विशेषाभावेष्वेव तत्तत्प्रतियोगितायाः कल्पनेन सामान्याभावस्याभावात्। तेजस एव तमोऽभावत्वं किं न स्यात्? शुक्लभास्वरोष्णस्पर्शयोरनन्यथासिद्धत्वात् तदाश्रिततया कल्पनापत्तेरिति चेत्—न; पार्थिवत्वसम्भवात्। धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वात्। न च गन्धाभावो बाधकः; अनुद्भवस्य सुवचत्वात्। तेन विनिगमनाविरहात् उभयोरपि भावत्वम्। रूपपरिमाणगत्युत्पत्तिविनाशादिप्रत्ययानां वाऽसति बाधके भ्रान्तत्वं कल्प्यमित्यपूर्वा युक्तिः। न च स्फटिकाद्युपरञ्जकत्वापत्तिः, जलादौ तदभावादिति दिशा। अतएव **विवरणे** भाट्टनयेन तमसो द्रव्यत्वमुक्तम्।

प्राभाकरास्त्वालोकज्ञानाभावत्वं तमसः सुवर्णस्य च द्रव्यान्तरत्वमुररीचक्रुः, तन्न; सौरालोकेऽपि तदप्रतिसन्धाने तमस्त्वापत्तेः। तमसि आलोकस्मरणे तदभावापत्तेश्च। तस्माच्छैत्यौष्ण्यवदालोकाभावनियतं द्रव्यान्तरं तम इति सिद्धम्। तदुक्तम्—

'तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥'

इति। तस्माद्युक्तमेकादश द्रव्याणि इति।

इति श्रीमन्नारायणभट्टसूनुरामकृष्णभट्टात्मज
कमलाकरभट्टकृते भाट्टमीमांसाकुतूहले
पदार्थोद्देशः॥

## पृथिवी निरूपणम्

तत्र पृथिवीत्ववती पृथिवी। रूपरसगन्धस्पर्शसङ्ख्यापरिमाणसंयोग गुरुत्वद्रवत्वस्नेहसंस्कारवती। अस्याः रूपरसगन्धस्पर्शा अनित्याः पाकजाश्चेति केचित्। तन्मन्दम्, सङ्ख्यादीनामपि तदापत्तेः।

### रूपादिगुणानां नित्यत्वसाधनम्

शुक्लादिरूपाणां लाघवेन नित्वत्वादेकत्वात् तदेवेदं नीलं रूपमिति

६. तदसम्भवः—रूपवत्वासम्भव इत्यर्थः।

प्रत्यभिज्ञानाच्च। अन्यथा त्वन्मते समवायस्यापि तन्न स्यात्। न चैवं घटादेरप्येकत्वं नित्यत्वञ्च स्यादिति वाच्यम्। तत्र सावयवत्वेनानित्यत्वग्रहात्। पाकस्त्वभिव्यञ्जक एव। अन्यथा जलेनात्यन्तक्लिन्नेषु पटादिषु रक्तिमा न स्यात्। न स्याच्च शुक्लेषु तृणादिषु जलसेकान्नीलिमा। तेजोऽवयवानां तत्र सत्वात् नायं दोष इति चेत्, वन्हावेव जलावयवसत्वस्य वक्तुः को वारयिता? तस्माद्विनिगमकाभावादुभयोः व्यञ्जकत्वम्।

ननु पृथिवीस्पर्शस्यापाकजत्वे गोचण्डालादिस्पर्शयोर्विधिनिषेधयोग्यत्वं न स्यात्, स्पर्शस्यैकत्वादिति चेत्—साधु समर्थितं तन्त्ररहस्यम्, तत्सत्वे बाधकाभावात् स्पर्शशब्दस्य संयोगार्थकत्वाच्च। अन्यथा गङ्गाकर्मनाशादिस्पर्शविधि निषेधाभ्यां जलेऽपि पाकजस्पर्शापत्तेः। ननु पाकेन काठिन्यकोमलत्वादिदर्शनात्पाकजः स्पर्श इति चेत्—न; तेषां संयोगविशेषत्वात्। दृढावयवसंयोगो हि काठिन्यम्, शिथिलावयवसंयोगश्च कोमलत्वम्। अन्यथा तयोश्चाक्षुषत्वं न स्यात्। तस्माद्रूपादयो नित्या इति सिद्धम्। आकृत्यधिकरणे, आचार्यैस्तु शुक्लादिगुणशब्दानां यागादिक्रियाशब्दानां च जातिवाचित्वमुक्तम्। 'ततः शुक्लादि तद्व्यक्तिगुणेषु प्रतितिष्ठति' इत्यादिना गुणकर्मणामवान्तरभेदोक्तेः।

यत्तु 'एतयैव दिशा वाच्या शुक्लादेरपि नित्यता' इति वार्तिकम् यच्च 'प्रत्यक्षद्रव्यवर्तिन्यः' इति, तत्परमतेनेति भट्टसोमेश्वरेणोक्तम्। तत्वतस्तु द्वेधा लिखनादभ्यासा[1]धिकरणदर्शनाच्च पक्षद्वयमप्याचार्याणां सम्मतमेवेति ज्ञायते। अतएव पार्थसारथिना स्वमते रूपैक्यमुक्त्वा 'येऽपि प्रतिद्रव्यं गुणभेदमातिष्ठन्ते तेऽपि सामान्यात्मना ऐक्यमिच्छन्त्येवेति' मतान्तरमुक्तम्। एतेन कारणगुणानां कार्यगुणारम्भकत्वं प्रत्यूढम्, घटैकत्वे तदभावात्। यद्यपि रूपादयो जन्याः स्युस्तथापि न कारणगुणपूर्वकाः, तन्तुरूपमेव हि पटभावमापन्नेषु तन्तुषु दृश्यते, न रूपान्तरम्, किं पुनर्यदा नित्याः। किञ्च न तन्तुरूपं पटरूपस्यासमवायिकारणम्, समवायिकारणप्रत्यासत्त्यभावात्। तस्माद् द्रव्येष्वेवासमवायिकारणापेक्षा, न गुणेषु। यदा तु रूपादिकं नित्यं तदा नतरां तदपेक्षा।

## चित्ररूपस्यातिरिक्तत्वाक्षेपः तन्निरासश्च

अत्र केचिदाहुः—पृथिव्यामन्यच्चित्रं रूपं सप्तममस्तीति। तथाहि चित्रः पटः चित्रं रूपमिति धीस्सर्वजनीना। न चेयं नानारूपगोचरा। व्याप्यवृत्तिवृत्तिजाते रूपत्वस्याव्याप्यवृत्तिताविरोधात्। किञ्च उद्भूतरूपवत्वस्य द्रव्यचाक्षुषताप्रयोजकत्वाच्चित्ररूपाभावे चित्रावयवी चाक्षुषो न स्यात्। न च संयोगादावुद्भूतरूपवत्समवेतत्वं चाक्षुषत्वे प्रयोजकं दृष्टम्। अतो द्रव्येऽपि तदेवेति वाच्यम्। चित्ररूपतन्त्वारब्धे पटे तदवयवानां नीरूपत्वात्पटे चाक्षुषत्वं न स्यात्।

---

१. २. २. २. अभ्यासाधिकरणे 'समधो यजति' 'तनूनपातं यजति' इत्यादौ यजतिशब्दस्याभ्यासान् कर्मभेदः स्थापितः। तन्न्यायेन वार्तिकं नेयमिति भावः।

न च 'तत्रोद्भूतरूपसमवेतसमवेतत्वं तन्त्रम्, अननुगमात्। तस्मादुद्भूतरूपवत्त्वं द्रव्यचाक्षुषे तन्त्रम्। ननु तथापि न चित्रं रूपान्तरम्। नानारूपसमुदायस्यैव चित्रत्वादिति चेत्—न; शुक्लादीनां व्याप्यवृत्तितादर्शनात्। ननु चित्ररूपे नीलपीतयोः प्रत्येकं हेतुता मिलितयोर्वा? नाद्यः; नीलमात्रारब्धे पटेऽपि चित्ररूपापत्तेः। न चैकस्यानारम्भकत्वान्न तदापत्तिः। नीलमात्रस्याप्यनारम्भापत्तेः। तस्मादेकानारम्भकत्वनियमः द्रव्यसमवायिकारणपर एव। द्वितन्तुकपटे एकसंयोगस्य हेतुत्वाच्च। नान्त्यः; एककार्ये हि सहकारित्वम्, यथा घटे दण्डचक्रयोः। रूपद्वयस्य चित्रत्वे च नीलेन नीलस्य पीतेन पीतस्य जननान्नैककार्यता। अतः कथं सहकारित्वम्; तस्माद्रूपभेद एव युक्तः। नैवम्, नीलेन चित्रारम्भात् नीलमात्रारम्भे च पीतस्य प्रतिबन्धकत्वाच्चित्रं रूपान्तरमिति।

अत्राहुः—नानारूपाण्येव चित्रं न तु भिन्नम्। न वा व्याप्यवृत्तिताविरोधः, शुक्लमात्रस्य व्याप्यवृत्तित्वेऽपि चित्राणामव्याप्यवृत्तित्वे बाधकाभावात्। न चैकत्र नीले कथं व्याप्यवृत्तित्वम् तदभावश्च विरोधादिति वाच्यम्, व्यक्तिभेदात्। न हि यदेव व्याप्यवृत्ति तदेवाव्याप्यवृत्ति, किं तु तज्जातीयम्। न च व्याप्यवृत्तिवृत्तिधर्मस्य कथमव्याप्यवृत्तिवृत्तित्वमिति वाच्यम्, अभावत्वस्य व्याप्यवृत्तिघटात्यन्ताभाववृत्तित्वेऽप्यव्याप्यवृत्तिसंयोगाभाववृत्तित्वात्। न च व्याप्यवृत्तिवृत्तिजातौ नियमः, अभावत्वं तु न जातिरिति न्याय्यम्, गुणत्वस्य व्याप्यवृत्तिसङ्ख्यादिवृत्तित्वेऽपि अव्याप्यवृत्ति संयोगशब्दज्ञानसुखादिवृत्तित्ववत् रूपेऽपि तथात्वे[1] शपथाभावात्।

### व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वविरोधपरिहारः

न च गुणत्वावान्तरजातौ[2] तथानियमः, अस्मदादिज्ञानस्याव्याप्यवृत्तित्वादीश्वरज्ञानस्य च व्याप्यवृत्तित्वाद् ज्ञानत्वे व्यभिचारात्। ननु रूपत्वस्य सविषयावृत्तिव्याप्यवृत्तिवृत्तिजातित्वात् सङ्ख्यात्ववन्नाव्याप्यवृत्तिवृत्तित्वं युक्तम्। ज्ञानत्वं च सविषयज्ञानवृत्त्येवेति न तत्र व्यभिचारः। नापि संयोगत्वे तस्याव्याप्यवृत्तिवृत्तित्वादिति चेत्—न; द्रव्यत्वे व्यभिचारात्। घटस्य समवायसम्बन्धेन व्याप्यवृत्तित्वेऽपि संयोगसम्बन्धेनाव्याप्यवृत्तित्वात् तद्वृत्तित्वाच्च द्रव्यत्वस्य। न च द्रव्यं संयोगसम्बन्धेन नाव्याप्यवृत्ति किन्तु संयोग एवेति वाच्यम्, संयोगवत् इह पर्वतेऽग्रे वन्हिर्न मूले इति प्रतीतेस्तुल्यत्वात्। न च संयोगाव्याप्यवृत्तित्वमेवात्र विषयो लाघवादिति वाच्यम्, वैपरीत्यस्य सुवचत्वात्। वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतोऽपि तत्त्वाच्च। न च व्याप्यवृत्तिवृत्तिजातेस्सम्बन्धसा (मान्ये) न नाव्याप्यवृत्तिवृत्तित्वम्, संयोगत्वे व्यभिचारात्। तस्य समवायसम्बन्धेन व्याप्यवृत्ति घटाकाशसंयोगवृत्तित्वेऽपि समवायेनाव्याप्यवृत्तिवृक्षकपिसंयोगवृत्तित्वात्। किञ्च यथा प्रतीतिबलात् संयोगस्याव्याप्यवृत्तित्वं तथेह घटे दशासु पीतं न

१. तथात्वे—रूपत्वस्याप्यव्याप्यवृत्तितयाऽङ्गीकारे इत्यर्थः।

२. तथा नियमः—व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तित्वं नास्तीति नियम इत्यर्थः।

मध्ये इति प्रतीत्या रूपमप्यव्याप्यवृत्ति। न चावयवरूपमेवात्र प्रतीयते नावयविरूपम्। तच्च व्याप्यवृत्त्येवेति वाच्यम्, संयोगेऽपि तथापत्तेः। किञ्च नीलं नीलेतराजनकं नीलत्वात् व्यतिरेकेण पीतवत् इति न चित्रं रूपान्तरम्। किञ्च यथाऽन्यत्रादृष्टमपि पृथिवीरूपस्य पाकजत्वमङ्गीक्रियते, तथा प्रमाणबलात् रूपमव्याप्यवृत्तिं स्वीक्रियताम्। तस्मात्संयोगवदव्याप्यवृत्तीन्येव नानारूपाणि चित्रमिति पार्थसारथिप्रमुखाः। उक्तञ्चैतत् शिरोमणिनाऽपि। 'चित्रमपि नातिरिक्तं रूपम्' इत्यादिना। एवं चित्ररसोऽपि। ननु गुणासमानाधिकरणसविषयावृत्ति व्याप्यवृत्तिवृत्तिजातेर्नाव्याप्यवृत्तित्वम्। न च द्रव्यत्वे व्यभिचारः, गुणसमानाधिकरणत्वात्। तस्माद्भिन्नं चित्रं रूपम्। न चाप्रयोजकत्वम्, क्लृप्तैश्चित्रप्रतीते भिन्नभिन्नधर्मिकल्पने गौरवमिति वाच्यम्, चित्रं रूपमिति प्रतीतेरनेकविषयत्वे गौरवादेकविषयत्वे च लाघवात्, प्रामाणिकगौरवस्यादोषत्वात्, [1]अधिकरणभिन्नाभाववत्।

## चित्ररूपस्य नीलपीताद्यतिरिक्तत्वसाधनम्

किञ्च अनुगतधीर्जातिसाधिका। अत्र चेदं चित्रमिदं चित्रमिति अनुगतप्रतीत्या जातिसिद्धौ तदाश्रयचित्ररूपसिद्धिः। न चैवं वनेष्वपि जातित्वापत्तिः, आम्रत्वादिना परापरभावायोगात्। न चात्रापि रसत्वादिना साङ्कर्यम्, तद्व्याप्यचित्राणां नानात्वात्। न च वनत्वेऽप्यापत्तिः, चूतवने तन्मिश्रवने चातिप्रसङ्गात्। वनत्वव्याप्यानां बहुतरापत्तेः।

किञ्च नानारूपाणां चित्रत्वे समुदायवाचकस्य वनं वृक्षा इतिवद्विशेष्यसामानाधिकरण्याच्चित्रं रूपाणीति प्रसङ्गः। ननु कारणगुणानां कार्यगुणारम्भकत्वात् विजातीयानां नीलपीतादितन्तुरूपाणां कथं चित्ररूपारम्भकत्वमिति चेन्न; कार्यैक्येन सहकारित्वात्। नन्वेवं चित्ररसा हरीतकी चित्रगन्धः कर्दमः चित्रस्पर्शा पटीति प्रतीतेः चित्ररसादयोऽपि सिद्ध्येयुरिति चेत्—सिध्यन्तु, का नः क्षतिः ? इति पदार्थचन्द्रिकादयः। अन्ये त्वाहुः—न हरीतक्यादौ चित्रो रसः. एकार्थ समवायेन षड्रसानामवयवगतानामेवोपलम्भात्। न च चित्ररसवदवयवारब्धहरीतक्यां षड्रसैस्सहैकार्थसमवायाभावः। तत्र षड्रसैस्सहैकार्थसमवेतसमवायेन तथा प्रतीतेः। न चाननुगमः, प्रमाणसिद्धत्वात्।

## चित्ररसादेरतिरिक्तत्वनिरासः

प्रगन्नाचार्यास्तु—पाकजापाकजस्पर्शवदवयवारब्धघटेऽन्यतरस्पर्शनियामकाभावाच्चित्रस्पर्शोऽस्ति। न चोष्णानुष्णाशीतावयवारब्धजातिसङ्करवदत्र तदापत्तिः, पृथिवीत्वस्यैव सत्वादित्याहुः। तन्न; कारणगुणपूर्वको ह्यपाकजः। स चा-

१. अधिकरणभिन्नाभाववत् इति। अभावस्याधिकरणात्मकत्वे अधिकरणानां नानात्वेन गौरवापत्त्या लाघवात् अधिकरणभिन्नत्वेन यथाऽभावः स्वीक्रियते तथा चित्ररूपमपि लाघवाद्भिन्नमेव इत्याशयः।

ग्रास्त्येव। तेजस्संयोगासमवायिकारणकश्च पाकजः। स च परमाणावेव। द्व्यणुकादौ तु अपाकज एवेति वैशेषिकाः। ननु घटे एकदेशेऽग्निसंयोगेन पूर्वस्पर्शनाशादन्यकपालस्पर्शाग्निसंयोगाभ्यां चित्रस्पर्शारम्भः। न चैकस्य घटस्पर्शस्यावच्छेदभेदेन नाशानाशौ युक्तौ, नानास्पर्शापत्तेश्च। न च तत्र सर्वावयवाग्निसंयोगाभावान्न पूर्वस्पर्शनाश इति वाच्यम्, लाघवेन समानाधिकरणाग्निसंयोगस्यैव नाशकत्वादिति चेन्न; चित्रत्वे हि गुणत्वावान्तरजातिव्याप्यनानाजातिमज्जन्यत्वं तन्त्रम्। न च नीलत्वस्य रूपत्वव्याप्यत्ववत्संयोगत्वं स्पर्शत्वव्याप्यम्। अतो न चित्रस्पर्श इत्याहुः। तस्माद्विजातीयनानासमाहारोऽपेक्षाबुद्धिवशाच्चित्रमित्युच्यते। अन्यथा इह देशे नीलं पीतं रक्तमिति पृथङ् न प्रतीयेत। एवं चित्रो रसो गन्धः स्पर्शः कर्दमः चित्रौदन इत्यपि नार्थान्तरम्। सजातीयसमाहारस्तु समुदाय इत्युच्यते। एवं च [1]पूर्वोक्तनियमोऽत्र [2]प्रयोजक इति दिक्।

## सुवर्णस्य पार्थिवत्वसाधनम्

सुवर्णं पार्थिवम् [3]सा च मृत्पाषाणसुवर्णशरीरादिरूपा। ननु सुवर्णं न पार्थिवम्, अत्यन्तानलसंयोगेऽपि पीतरूपद्रवत्वयोरनुच्छेदात्। पार्थिवे च रूपादिपरिवृत्तेर्दर्शनात्। न च जलाद्युपष्टम्भेन स इति वाच्यम्, नैमित्तिकद्रवत्वाधिकरणत्वात् जले च तदभावात्। तेन पृथिवीजलवैषम्यात् सुवर्णं तैजसम्। मैवम्, पृथिवीत्वनियतनैमित्तिकद्रवत्वपीतरूपाभ्यां पृथिव्या एवांशैर्जलेन वा रूपादिपरावृत्तिप्रतिबन्धकल्पनात्। अन्यथा तेजसो रूपविपरावृत्तिप्रतिबन्धकत्वे घटेऽपि पाकेन सा न स्यात्। सुवर्णे तैजसत्वं तेजसि नैमित्तिकद्रवत्वं तदनुच्छेदः शुक्लभास्वररूपोष्णस्पर्शयोरभिभवः गुरुत्वञ्चेति कल्पनापेक्षया प्रतिबन्धाद्रूपद्रवत्वयोरनुच्छेदमात्रकल्पने लाघवं कस्सचेता न रोचयेदन्यत्राभिनिवेशात्। अतएव [4]तुत्थे न द्रवत्वं भस्मीभावश्च दृश्यते, तैजसे तदयोगात्। तस्मात् पार्थिवमेव सुवर्णम्। 'अग्नेरपत्यं प्रथमं हिरण्यम्' इति श्रौतं लिङ्गं तद्–'अग्निर्वै ब्राह्मणः' इतिवत् स्तुत्यर्थमिति सङ्क्षेपः।

इति कमलाकरभट्टकृतौ पृथिवी

## अब्निरूपणम्

अप्त्वसामान्यवत्य आपः। गन्धवर्जं पूर्वोक्तदशगुणवत्यः। नित्या अनि-

---

१. पूर्वोक्तनियमः—व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिता नास्तीति नियमोऽपीत्यर्थः।

२. अप्रयोजक इति। अयमत्र भावः–यथा प्रत्यक्षप्रमाणबलात् परत्र पार्थिवरूपस्य पाकजत्वं स्वीक्रियते तथा प्रकृतेऽपि प्रमाणबलात् रूपस्याप्यव्याप्यवृत्तित्वस्वीकारे नैव काचित्क्षतिः। अतश्च निरुक्तनियमोऽप्रयोजक इति।

३. सा-पृथिवी इत्यर्थः।

४. सुवर्णस्य द्रवीभावभस्मसम्पादकं द्रव्यं तुत्थशब्देनाभिधीयते।

त्याश्च पूर्ववत् । तासां रसो मधुर एव । पृथिव्यनुवेधात्तु समुद्रजले क्षारत्वम् कथमन्यथा तस्यैव घनमुक्तस्य माधुर्यम् । शेषं प्राग्वत् ।

इत्यापः ।

**तेजोनिरूपणम्**

तेजस्त्ववत् तेजः । रूप-सङ्ख्या-स्पर्श-परिमाणसंयोगसंस्कारवत् । तत् त्रिविधम्—दिव्यं भौममुदर्यञ्चेति । आद्यं सौरादि । द्वितीयं वह्न्यादि । अन्त्यं जाठरानलः । वडवानलवैद्युतादि जलजमित्यपि केचित् । नित्यत्वानित्यत्वादि पूर्ववत् ।

इति तेजः

**वायोः पृथिव्यतिरिक्तत्व-साधनम्**

वायुत्ववान् वायुः । स्पर्शसङ्ख्यापरिमाणसंयोगवेगवान् । ननु पृथिवीभिन्नो वायुरसिद्धः, वायुः पृथिवी अनुष्णाशीतस्पर्शवत्वात् घटवत् । न च नीरूपत्वान्नेति वाच्यम्, घ्राणवदनुद्भूतरूपत्वात् । उद्भूतस्पर्शस्य कथमनुद्भूतरूपवत्वमिति चेत् न, तप्तवारिस्थतेजोवदुपपत्तेः । न च वायुस्पर्शस्यापाकजत्वे राजाज्ञा, पाकजत्वस्य सुवचत्वात् । न च वायोरप्रत्यक्षत्वान्न पार्थिवत्वम् । तदसिद्धेः, घ्राणे तुल्यत्वाच्च । अत्राहुः-पृथिव्या उद्भूतस्पर्शाया रूपगन्धयोरुद्भवनियमाद्रूपं गन्धश्च प्रतीयेत[1] । घ्राणे तु रूपगन्धस्पर्शानां सर्वेषामनुद्भवः । न च पृथिव्यामेकस्यानुद्भवोऽपरस्य चोद्भवो दृष्टः । रसगुरुत्वाद्यभावाच्च । न चाध्माते चर्मकोशे गुरुत्वदर्शनात् तत्सिद्धिः, फूत्कारेण पार्थिवावयवानां मध्येऽनुप्रवेशात् । अन्यथा व्योम्नि न वायुर्वायात्, न स्याच्च कागलयन्त्रादिधारकत्वम् । न च सर्वेषामनुद्भवः, पृथिव्यां तथाऽदर्शनात् । 'आकाशाद्वायुः, वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी' इति 'पञ्चभूतात्मके देहे' इति भेदनिर्देशाच्च ।

**वायोः अप्रत्यक्षत्वनिरासः**

वायुर्न पृथिवीति भेदप्रतीतेश्च । स च स्पार्शनप्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात् घटवत्, पटवत् वायुं स्पृशामीत्यनुभवाच्च । ननु नैतद्युक्तम्, वायोरप्रत्यक्षत्वात् । न हि प्रत्यक्षत्वमात्रे स्पर्शाश्रयत्वं प्रयोजकम्, उद्भूतरूपवत्वस्योपाधित्वात् । यद्यपि न द्रव्यप्रत्यक्षमात्रे तत्प्रयोजकम् । आत्मनि साध्याव्यापकत्वात्, तथापि बहिर्द्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्वमुपाधिः । शीतो वायुरिति तूपनीतभानं मनसा स्पार्शनत्वारोपो वा । नैवम्; सुवर्णे तप्तवारिस्थतेजसि ग्रीष्मोष्मणि च व्यभिचारात् । स्पार्शनप्रत्यक्ष इति मते तु न कोऽपि दोषः । न च तप्तवारिस्थतेजसि स्पर्श एव प्रत्यक्षो न द्रव्यमिति वाच्यम्, मणिप्रभायां रूपमात्रप्रत्यक्षतापत्तेः । घटेऽपि स्पर्शेन घटानुमानापत्तेश्च । प्रभाया अतीन्द्रियत्वे इह पक्षीति धीः कथम्? इदानीं घट इतिवदुपनीतभानमिति ब्रूमः । न

१. वायाविति शेषः ।

च बहिर्द्रव्यप्रत्यक्षे उद्भूतरूपवत्वविशिष्टं स्पर्शवत्वं हेतुः, रूपविशिष्टस्पर्शतद्विशिष्टरूपयोर्हेतुत्वे नियामकाभावात्। ततश्चाक्षुषे उद्भूतरूपवत्वं स्पार्शने चोद्भूतस्पर्शवत्वं प्रत्येकमेव हेतुः। एतेनोद्भूतरूपजन्यत्वं चाक्षुषत्वे प्रत्यक्षत्वे वा नियामकं परास्तम्। उद्भूतस्पर्शजन्यत्वस्य तत्त्वे शपथाभावात्।

किञ्च द्रव्यप्रत्यक्षमात्रे महत्वसमानाधिकरणोद्भूतरूपवत्वं प्रयोजकमित्यात्मनोऽप्रत्यक्षत्वापत्तिः। आत्मनो मानसप्रत्यक्षत्वान्नैवमिति चेत्–वायोः स्पार्शनप्रत्यक्षत्वात्तदपि नेति यत्किञ्चिदेतत्। वाय्वादेर्योग्यत्वाद्वायुगतसङ्ख्यादि प्रतीयेतेति चेत्, न; यद्युद्भूतरूपवत्वं द्रव्ययोग्यता तदा कथं तदभावे वायो भानापत्तिः ?

उद्भूतस्पर्शवत्वं चेत् तवाप्यापत्तिर्दुर्वारा। तस्माद्वायुः प्रत्यक्ष इति सिद्धम्। स द्वेधा—नित्योऽनित्यश्च। अणुकार्यभेदात्। ननु गर्भगृहै व्यजनात् तत्प्रतीतेरेक एव विभुर्वायुः। मैवम्, व्यजनभ्रमणक्रोडीकृतावयवानां तथा प्रतीतेः। अन्यथा तारतम्यायोगात् इति दिक्।

इति वायुः

## आकाशनिरूपणम्।

अवकाशात्मकं व्योम। सङ्ख्यापरिमाणसंयोगवत्। न च शब्दोऽप्यस्य गुणः, तस्य द्रव्यान्तरत्वोक्तेः। तच्चैकं विभु नित्यञ्च। तच्चाक्षुषम्, नोलं तम इति प्रतीतेर्भ्रान्तित्वे मानाभावात्। अतिविरलत्वेन चान्यत्वानुपलम्भाद् रूपान्तरेणाभिभवाद्वा। मेरुमूर्धगतमणीनां प्रभेयमिति प्रवादमात्रम् मानाभावादित्येके। अन्ये तु दूरत्वदोषेण सागरजले इव नीलत्वावभासः कटाहवत् अत्युज्वलत्वं भूतलसंलग्नत्वं च भ्रान्तमेव। तदुक्तं कल्पतरौ 'वियद्वद्वालैस्तल मलिनताद्याकलितमिति'। आकाशे पक्षीति विशिष्टप्रत्ययादेव चाक्षुषत्वमित्याहुः। विशदावभासं व्योम चाक्षुषमेवेति **तन्त्ररत्नेऽप्युक्तम् षष्ठे** प्रतिनिध्यधिकरणे। न च वायोश्चाक्षुषत्वापत्तिः, इह पक्षोति विशिष्टप्रतीत्या हि व्योम चाक्षुषम्। इदानीं घट इति कालवत् ज्ञानलक्षणाभावात् अतोन्द्रियस्य स्मृत्योपनीतस्य भानायोगाच्च। अन्यथा परमाणोस्तदापत्तेः। न च वायौ साऽस्ति।

## कालनिरूपणम्

कालोऽतीतादिधीहेतुः। कालकृतपरत्वापरत्वानुमेयश्चेति तार्किकाः। यावज्जीवपादे राणके तु सूर्योदयः घटः शब्दो वा भूतो वर्तते भविष्यति वेत्यादि सर्वविशेषणतया वर्तमानादिकालप्रतीतेः अतीतसत्तादौ च तदप्रतीतेः सत्ताविषयत्वायोगात् ज्ञानलक्षणानिरासाच्चोपनीतभानायोगात् प्रत्यक्षः कालः। तत्रैक पलानेकक्रियाक्षणसमुदायावच्छिन्नो वर्तमानः कालः। एवमुपाधिभेदाद्भूतादिः। अतः षडिन्द्रियवेद्य इत्युक्तम्।

## दिङ्निरूपणम्

दिक् प्राच्यादिधीहेतुः। दिक्कृतपरत्वापरत्वगम्या च। दूरस्थे हि यूनि परत्वम् समीपस्थे च वृद्धेऽपरत्वं प्रतीयते। कालकृते तु वैपरीत्यम्। ताभ्यां दिक्कालावनुमेयौ। तथा हि बह्वल्पसूर्यपरिस्पन्दान्तरितत्वेन वृद्धयूनोः परत्वापरत्वे प्रतीयेते। सूर्यस्पन्दस्य च सूर्यसमवेतत्वेन साक्षाद्वृद्धादिशरीरसम्बन्धयभावाच्छरीरसंयुक्तकालसंयुक्तसूर्यसमवेतत्वरूपः परम्परासंबन्ध एव हेतुः। तत्सम्बन्धघटकश्च काल एव। न चात्माकाशादेस्तत्त्वम्। तस्यान्यधर्मोपनायकत्वे घटादिरूपस्य पटादावुपनयापत्तेः। काले तु नैवम्। तस्य धर्मिग्राहकमानेन सूर्यगतिमात्रोपनायकत्वेन रूपानुपनायकत्वात्।

## कालस्य आत्माकाशानतिरिक्तत्वशङ्का

अत्राहुः भट्टसोमेश्वरादयः—अतिप्रसङ्गभङ्गाय कालस्य सूर्यक्रियामात्रोपनायकत्वं कल्प्यञ्चेदात्मन आकाशस्य वा सूर्यगतिसहकारिभेदात् विलक्षणसामर्थ्यं न तत्कल्प्यताम् धर्मिकल्पनात इति न्यायात्। किञ्च कालेन वृद्धेऽल्पसूर्यक्रियाया यूनि च बहुतरसूर्यक्रियायाः कथं नोपनयः? असम्बन्धादिति चेत्—न; तत्सम्बन्धिसूर्यसम्बन्धाविशेषात्। अयमपि स्वभावोऽन्यश्चेदात्मन्येब तथाऽस्तु। विशेषगुणवत्वादात्माकाशौ नोपनायकाविति चेत्—न; विपक्षे बाधकाभावादव्यापकत्वस्य साधनावच्छिन्नसाध्यव्यापकत्वेनोपाधित्वाच्च। एवं दिगपि न भिन्ना, आत्मन एव निमित्तवशाद्दिश इव प्राच्यादिव्यवहारहेतुत्वात्। एवमाकाशेऽपि न मानम्। यद्यपि न मूर्ताभाव आकाशः, तथापि न द्रव्यान्तरम् शब्दनिमित्तकारणत्वेन क्लृप्तेश्वरस्यैव समवायिकारणत्वोपपत्तेः। न च श्रोत्रानुपपत्त्या तत्सिद्धिः, कर्णविवरावच्छिन्नेश्वरस्यैव तत्त्वात्। 'दिशः श्रोत्रम्' इति श्रुतेः दिगात्मकमेवेति भट्टपादाः पार्थसारथिश्च। तदुक्तम्—'व्योमात्मकत्वे यो हेतुः श्रोत्रस्य तव सम्मतः। दिगात्मकत्वे तुल्योऽसावागमात्तु विशिष्यते'। तदाह शिरोमणिः 'शब्दनिमित्तकारणत्वेन क्लृप्तेश्वरस्यैव शब्दसमवायित्वम्' इति। तस्मान्नेश्वरातिरिक्त आकाशः कालो दिग्वास्तीति। मैवम्;

## कालादीनामीश्वराद्यतिरिक्तत्वसाधनम्

आकाशादेरपि प्रमाणसिद्धत्वात्। अन्यथाऽऽकाशेश्वरौ कालाकाशौ इत्यादि सहप्रयोगायोगात्। न चोपाधिवशात्तथा, उपाधेरनिर्वचनात्। न च शब्दकारणत्वादिकं तथा, शब्दस्य नित्यत्वात् द्रव्यान्तरत्वाच्च। श्रुतौ 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिनिर्देशायोगाच्च। तत्किमाकाशो जन्यः? ओमिति वेदान्तिनः। स्मृतिरपि सर्गादौ 'स यदाकाशं वायुं तेजो जलं महीम् सृजत्येकोत्तरगुणांस्तथाऽऽदत्ते भवन्नपि' इति। अन्ये त्वेतदुपासनापरमाहुः।

इति व्योमादित्रयम्।

## आत्मनिरूपणम्

आत्मत्ववान् आत्मा। स चैको विभुर्नित्यश्च। न तु देहरूपः, 'अविनाशी वा अरेऽयमात्मा' इति श्रुतेः। 'अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' इति स्मृतेश्च। स्तनपाने प्रवृत्तिर्बालस्येष्टहेतुता स्मृतिजन्य, स्मृतिश्च नानुभवं विना, स च नैतद्देहेऽस्तीति जन्मान्तरीयः कल्प्यते। देहरूपत्वे च पूर्वदेहनाशात् स्तनपाने प्रवृत्तिर्न स्यात्। न स्याच्च पूर्वजातिस्मरत्वम्, अनुभवाभावात्। किञ्च (?) यमदूतैर्नाभिभ्रमान्नीतानां परलोककृतान्तकथनं न स्याच्च। पिशाचादीनां परकायमाविश्य गयाश्राद्धादिपावनस्य भ्रमत्वे गयाश्राद्धात् पैशाच्यनाशः पीडानिवृत्तिश्च न स्यात्। स्वर्गसाधनकर्मबोधकवेदाप्रामाण्यापत्तेः कृतहानाकृताभ्यागमापत्तेश्च। एतेनानित्यत्वं प्रत्यूढम्। तद्गुणाः—सङ्ख्यापरिमाणसंयोगबुद्धिसुखदुःखेच्छाप्रयत्नधर्माधर्मसंस्काराः। ते च नित्या लाघवात् समवायवत्। स च नित्यज्ञानसुखवान् 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नित्यं विज्ञानमानन्दं ब्रह्म' 'अत्रायं पुरुषः स्वयंज्योतिः' इत्यादिश्रुतेः। नित्यमेव सुखं विषयैरभिव्यज्यते विरोधिगुणैश्चाभिभूयते। 'विज्ञानमानन्दम्' इति मत्वर्थेऽच्प्रत्ययः। तेन ज्ञानवान् न तु ज्ञानसुखात्मकः, ज्ञानवानहं सुखवानहमिति भेदप्रतीतेश्च। तच्च ज्ञानं स्वप्रकाशम् घटोऽयमिति धारावाहिकज्ञानोत्तरमाप्रहरं घटमद्राक्षं नान्यदवेदिषमिति स्मृतिर्न स्यात्, अनुभवाभावे स्मृत्ययोगात्, मध्ये तु व्यवसाये (धाने) धाराविच्छेदापत्तेर्नान्यदवेदिषमिति बाधाच्च। न चेयमनुमितिः स्मृतिरिति वाच्यम्, लिङ्गाभावात्। न च व्यवहारो लिङ्गम्, तेन चाक्षुषत्वप्रहरसम्बन्धासिद्धेः। न चाहं प्रहरघटज्ञानवान् घटव्यवहर्तृत्वात् इति तत्सिद्धिः चाक्षुषत्वासिद्धौ अद्राक्षमित्ययोगात् नान्यदवेदिषमित्यन्यज्ञानाभावप्रत्ययाच्च। न च घटज्ञानादन्यज्ञानाभावानुमितिः, अनेकज्ञानसत्त्वेनैकज्ञानस्येतरज्ञानाभावाव्याप्तेः, अतः स्वप्रकाशं सुखं नित्यम्, अन्यथा मोक्षायोगादिति शिरोमणिभट्टाचार्याः। तत्र जन्यसुखासम्भवात् दुःखाभावत्वनिरासाच्च। ननु आत्मा सुखरूप एव, प्रेमास्पदत्वात्। एवं 'सुखमहमस्वाप्सम्' इति धीर्न स्यात्, तत्र सुखाननुभवात्। न च दुःखाभावविषया सा, सुषुप्तौ तस्याप्यज्ञानात्। न च सुखवत्तया [1]तत्त्वं, दुःखवत्तया द्वेषास्पदत्वापत्तेः। 'आत्मनस्तु कामाय सर्वं प्रियम्' इति श्रुतेश्च। नैवम्, दुःखस्याध्यस्तत्वात् सुखवत्तया सर्वोपपत्तेश्च। केचिद्वैषयिकं सुखं भिन्नमित्याहुः। राणकमते ऐकात्म्यं पारमार्थिकम्। भेदोक्तिर्जीवपरा। पार्थसारथिमते भेद एव सत्यः। सर्वं प्रागुक्तं मोक्षवादे। परमतञ्च निरस्तम्। तस्यानन्दांशाभिव्यक्तिर्मुक्तिः। दुःखाभाव एव मोक्ष इत्येके। स प्रागुक्तः।

इत्यात्मा

## मनोनिरूपणम्

मनस्त्वयोगान्मनः। सङ्ख्यापरिमाणसंयोगवत्। नित्यं विभु च। ननु मन-

---

१. तत्त्वं-प्रेमास्पदत्वमित्यर्थः।

स्सत्त्वे किं मानम् ? न तावत् व्यासङ्गः, अदृष्टेन बुभुत्सया वा तत्सिद्धेः। अन्यथा चक्षुस्संयुक्तेषु दशस्वर्थेषु एकस्यैव ज्ञानं न स्यात्। तत्र बुभुत्सा कारणमिति चेत्, तर्हि सैवास्तु। एतेन मनसो विभुत्वे त्वक् चक्षुराद्यनेकेन्द्रियसंयुक्तार्थेषु एकस्यैव ज्ञानं न स्यादिति दूषणं परास्तम्। अणुत्वेऽपि चक्षुस्संयुक्तनानार्थेषु एकज्ञानायोगात्। मनःक्रियाजन्यतत्तद्देश संयोगस्यापि तुल्यत्वात्।

### मनसोऽदृष्टाद्यतिरिक्तत्वाभावसाधनम्

यत्तु चक्षुस्संयोगे तदवच्छिन्नत्वचापि संयोगाच्चाक्षुषस्पार्शनद्वयापत्तिः, तत्रादृष्टं नियामकं चेत् तदेवास्तु किं मनसा इति ? तन्न; धूमवह्निनेत्र सम्बन्धे चक्षुषा रूपस्य त्वचा धूमस्पर्शस्यानुभवाच्चेष्टापत्तेः। कथमेकदा ज्ञानद्वयमिति चेत्, किं छिन्नम् ? स्वस्वकारणात्तदुपपत्तेः। पादे सुखं शिरसि मे वेदनेति प्रतीतेश्च। न चैकत्र सजातीयकार्यद्वयविरोधः, आकाशे एकदा दुन्दुभिशङ्खादिलक्षणशब्दोत्पत्तेः। एतेन चित्रं रूपान्तरं परास्तम्। तेन सजातीयकार्यद्वयायोगो ( प्रवाद ) मात्रम्। तेन बुभुत्सया व्यासङ्गोपपत्तेः नार्थो मनसा। न च सुखादिधीः करणजन्या क्रियात्वादिति तत्सिद्धिः,चक्षुषाऽन्ययासिद्धेः, सुखादीनां रूपवत्वाभावे कथं चाक्षुषत्वमिति चेत्—न; एकेन्द्रियेणैव तत्तदवच्छेदेन नानार्थग्रहसम्भवेऽनेकेन्द्रियसत्त्वे मानाभावात्। एकमेषेन्द्रियं सर्वशरीरे स्पर्शः नेत्रे रूपं श्रोत्रे शब्दं घ्राणे गन्धं जिह्वायां रसं अनवच्छिन्नञ्च सुखादिकं गृह्णातु। न च विनिगमनाविरहः, सङ्कोचविकासवेगवत्वेन चक्षुष एव तथात्वात्। यथा त्वचो नेत्रावच्छेदेन धूमस्पर्शग्राहकत्वं नान्यत्र, तथैकेन्द्रियस्य ग्राहकत्वमग्राहकत्वं चाविरुद्धम्। समञ्च परमते, सविधे परिमाणाद्यग्रहणात्, नेत्रलग्नकज्जलाद्यग्रहणाच्च। न चान्धस्य रूपग्रहः स्पर्शाग्रहो वा स्यादिति वाच्यम्। यथाश्रोत्रावच्छिन्नमनसोऽदृष्टाभावाद्वैकल्यं तथाऽत्रापोति। अतो नार्थो मनसा।

### मनसः अदृष्टातिरिक्तत्वप्रसाधनम्

मैवम्; यदि मनो न स्यात् स्वप्नस्मृत्यादिधीर्न स्यात्। अदृष्टोपबन्धाद्वरं दृष्टमिन्द्रियम्। 'मनःषष्ठानीन्द्रियाणि' इत्यागमाच्च। तच्च मनो विभु। बाहुचन्दनलेपादौ तदवच्छिन्नसुखप्रतीतेः। शीघ्रगतिमत्वे मानाभावादनवच्छिन्नशरीरे शून्यत्वापत्तेश्च। न च विभुत्वे मरणासम्भवः, प्राणवियोगेनोपपत्तेः। तच्च पृथिव्यादीनामन्यतमद्रव्यान्तरं वेति पार्थसारथिः।

इति मनः

### शब्दनिरूपणम्

शब्दत्ववान् शब्दः। स द्विधा—ध्वनिर्वर्णात्मकश्च। सङ्ख्यापरिमाणसंयोगवान्। आद्ये वेगोऽपि। आद्यो वर्णहेतुस्तदहेतुश्च। वर्णः ककारादिः। तारत्व मन्द्रत्वादिर्ध्वनिधर्म एव वर्णे भासते। वर्णस्तु ककादिर्नित्य एव। केचिच्छब्दवृष्यादीनां त्रिक्षणावस्थायित्वमाहुः। तन्न; आक्रोशं (श्रूयमाणस्य) शब्दस्यैकत्वा-

त्स्थिरत्वाच्च। भेरीशब्दो मया श्रुतः, य एव त्वया श्रुतस्स एव मयापीति प्रतीतेश्च। स एवायं गकारस्तमेवानुभवामीति प्रतीतेर्लाघवाच्च। अस्या भ्रान्तत्वे वरं तवैव भ्रान्तत्वम्। अतः अनन्तककारतत्प्रागभावध्वंसजातीनां कल्पने गौरवात्। अन्यथा समवायोऽप्येको न स्यात्। एतेन प्रहरे घटमद्राक्षम्, एतावन्त कालमनुभवन्नेवासमिति प्रतीत्या ज्ञानैक्यं व्याख्यातम्, धारावाहिके मानाभावात्।

## प्रसङ्गात् तमसोऽवान्तरविभागनिरूपणम्

तमस्त्वसामान्यवत् तमः। रूपसङ्ख्यापरिमाणसंयोगवेगवत्। तत् त्रिविधम्—अवतमसम् सन्तमसम् अन्धतमसं चेति। तच्च प्रागुक्तम्।

इति कमलाकरभट्टकृते मीमांसाकुतूहले द्रव्यपदार्थः।

## गुणनिरूपणम्

अथ गुणाः। असमवायिकारणमस्पन्दात्मा गुणः। बुद्ध्यादौ तदभावेऽपि द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। स च रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-संयोग-गुरुत्व-द्रवत्व-स्नेह-बुद्धि-सुख-दुःखे-च्छा-प्रयत्न-धर्मा-धर्म-संस्कारभेदादष्टादश भेदः। पृथक्त्वं तु अन्योन्याभाव एव, न तु गुणः। परत्वमपरत्वं च कालदिक्संयोग एव। यथा ज्येष्ठत्वं कनिष्ठत्वं दूरत्वं समीपत्वञ्च न गुणान्तरम्। शब्दो द्रव्यमित्युक्तम्। संयोगाभाव एव विभाग इति वक्ष्यते। आचार्यास्तु [1]भिन्नमाहुः। एवं द्वेषोऽपि ज्ञानविशेष एव। अन्यथा श्रद्धा-भक्ति-लज्जा-क्रोध-भयादेरपि गुणान्तरत्वापत्तेः। अथ ते ज्ञानविशेषास्तदा द्वेषोऽपि तथाऽस्तु।

तत्र चक्षुर्ग्राह्यो गुणो रूपत्ववद्वा रूपम्। नील-पीत-हरित-रक्त-श्याम-शुक्लभेदात् षड्विधम्। चित्रं नानारूपसमुदायो नार्थान्तरमित्युक्तम्। तच्च नित्यगतं नित्यम्। अनित्ये पृथिव्यां चानित्यम्। जन्यं तस्यां पाकजं वेति केचित्। अन्ये रूपादिकं नित्ये पाकादिनाऽभिव्यज्यत इत्याहुः। एतच्च वार्तिकोक्तं पक्षद्वयं प्रागेवोक्तम्। एवं रसस्पर्शादयोऽपि। रसनग्राह्यो गुणो रसः, मधुरादिः षड्भेदः। गन्धो घ्राणग्राह्यो गुणः, सुरभिरसुरभिश्च। स्पर्शस्त्वगिन्द्रियग्राह्यो गुणः। स च शीतोष्णानुष्णाशीतभेदात् त्रिविधः। एते रूपादय उद्भूतानुद्भूतभेदात् द्विविधाः। सङ्ख्या एकत्वादिपरार्धपर्यन्ता। केचित्तु द्वित्वादिव्यवहारस्तत्तत्स्वरूपमात्रविषयकबुद्धिपर इति सङ्ख्यैव नास्तीत्याहुः। तन्न; बुद्धेरप्रतीतेश्च। सा द्वेधा-व्यासज्यवृत्तिरव्यासज्यवृत्तिश्च। आद्या द्वित्वादिका। अन्त्यैकत्वरूपा। सा चैकत्वत्वजातिमती। न चैकत्वमेकमेव, तस्य कार्यत्वे पूर्वमेकत्वायोगात्। यावदाश्रयं विनोत्पत्त्यभावाच्च। अकार्यत्वे तु उत्तरोत्पत्तिकेषु न समवेयात्। तस्याश्चैकत्वान्यसङ्ख्यायामेकत्वत्वेन कारणता। सा च नित्यगता नित्या, अनित्यगता त्वनित्या। अत्र तार्किकाः—

**संख्यायाः अपेक्षाबुद्धिजन्यत्ववर्णनं तन्निरासश्च**

द्वित्वादिकमपेक्षाबुद्धिजन्यम्। द्वित्वादिज्ञानत्वेन जन्यत्वे गौरवात् द्वित्वत्वेन कार्यत्वे लाघवादित्याहुः। तन्न; अपेक्षाबुद्धेरभिव्यञ्जकत्वेन द्वित्वाहेतुत्वात्। घटद्वये सहस्रपुंसां कालभेदेनापेक्षाबुद्धिभेदेन सहस्रद्वित्वापत्तेः। क्लृप्ते प्रत्यक्षसहस्रे द्वित्वस्य हेतुत्वे लाघवात् समवायस्य समवायिनिमित्तकल्पनेऽपेक्षाबुद्धिनाशस्य तन्नाशं प्रति हेतुत्वेऽतिगौरवाच्च। अन्यथा ह्रस्वत्वदीर्घत्वस्थूलसूक्ष्मत्वादिकमप्यपेक्षाबुद्धिजन्यं स्यात्। द्वित्वादिकं नापेक्षाधीजन्यं सङ्ख्यात्वादेकत्ववदित्यनुमानात्।

किञ्च—त्रित्वचतुष्ट्वाष्टत्वादौ द्वित्वैकत्वद्वित्वद्वयद्वित्वचतुष्कैकत्वाष्टकानां हेतुत्वे किं नियामकम्?। अत एव सर्वत्रैकत्वानिराकरणमिति चेत्—न; द्वित्वादेर्नित्यत्वस्य ततोऽपि लघुत्वात् त्वयाऽपेक्षाबुद्धेरपि हेतुत्वाङ्गीकारात्तस्याश्च नानात्वात्। एतेन त्रिषु द्वित्वस्य चतुर्षु वा त्रित्वस्यानुत्पत्तिर्विशिष्य हेतुत्वात् प्रागभावाभावात् स्वभावाददृष्टाभावाद्वेत्यादिनव्योक्तिः परास्ता। परापेक्षाबुद्धिजन्ये द्वित्वे तच्छून्येन ग्रहणापत्तेश्च। न हि सा द्वित्वोत्पत्तौ ग्रहे च कारणम्। तदीयद्वित्वज्ञाने तदपेक्षाबुद्धेस्तत्तत्संनिकर्षाणां हेतुत्वेऽतिगौरवाच्च। एतेनायोग्यत्वात्परेणाग्रहणं परास्तम्। सामग्रीसत्त्वेऽयोग्यत्वायोगात्। न च कार्यगुणत्वादनित्यता। नित्यत्वे जातित्वापत्तिर्वेति वाच्यम्। आश्रयव्यङ्ग्यत्वात् विपक्षे बाधकाभावाच्च रूपादिवत्। कार्यसमवेतत्वस्यैवानित्यत्वानियमाच्च। अत एवाष्टत्वे द्वित्वत्रित्वादिसत्त्वेऽप्यभिव्यञ्जकापेक्षाबुध्यभावान्नाभिव्यक्तिर्न वा परिच्छेदकत्वम्।

तदुक्तं **वार्तिके**—

यद्यप्यर्थात्मनास्त्येव महासङ्ख्यास्ववान्तरा।
अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम्'॥ इति।

अत एव 'शतं ब्राह्मणास्सोमं भक्षयन्ति' इत्यत्र दश दशैकमिति विभागोक्तिः। यत्तु नव्याः—द्वित्वादिकं नापेक्षाधीव्यङ्ग्यम् आश्रयगतैकत्वद्वयग्रहकाले एव द्वित्वग्रहात् उत्तरक्षणे तद्ग्रहे मानाभावात्। तार्किकाणां हि प्रथमक्षणे एकत्वग्रहः द्वितीयक्षणेऽपेक्षाबुध्या द्वित्वोत्पत्तिः, तृतीयक्षणे तद्ग्रह इति शपथः। तत्र लाघवात् द्वितीयक्षण एव तद्ग्रहोऽस्तु इत्याहुः। अन्ये तु सर्वैकादिगतमेकत्वं द्वित्वादि चैकमेवेत्याहुः। सा च संख्या द्रव्यवृत्तिरेवेत्येके। अपरे तु गुणादिसर्वपदार्थवृत्तिः, एकं रूपमिति बुद्धेः साक्षात्सम्बन्धपरत्वात्, अन्यथा वैपरीत्यापत्तेः व्यासज्यवृत्ते 'द्वित्वस्यैकाश्रितयोरिमौ रूपरसाविति व्यवहारायोगात्, रूपाश्रये द्वित्वाभावात्, रूपस्योभयावृत्तित्वाभावात्। यत्किञ्चिद् द्वित्वाश्रयवृत्तित्वेन तत्त्वे रूपमात्रेऽपि तथापत्तेरित्याहुः।

नतु संख्या कथं परार्धपर्यन्ता? एकं परार्धम् द्वे इत्यूर्ध्वमपि तत्सत्त्वात्।

न च परार्धं परार्धानीत्युक्ते ऊर्ध्वं तदयोगः। परार्धपरार्धानामेकत्वमित्येवं तत्सम्भवात्। शतपरार्धादिवत् तद्वाचकपारिभाषिकशब्दाभावात् तथा व्यपदेशः।

## परिमाणनिरूपणम्

परिमाणं मानव्यवहारहेतुः। अणुमहद्दीर्घह्रस्वादिभेदम्। अणुत्वं [1]त्रुटिगतम्, तद्भिन्नपरमाणोरभावात्। महत्त्वं द्वेधा-परमपरञ्च। आद्यं व्योमादौ। अन्त्यं जन्यम्। तत् पञ्चधासंख्याजं परिमाणजं उभयजं परिमाणप्रचयजं संख्यापरिमाणप्रचयजञ्च। आद्यं त्र्यणुके। अवयवमहत्त्वाभावादित्येके। अन्ये तु त्रुटेर्निरवयवत्वमाहुः। तन्तुमानजं पटे महत्वं द्वितीयम्। बहुभिर्महद्भिश्चारब्धं तृतीयम्। प्रचिताभ्यां महद्भ्यामारब्धं चतुर्थम्। तैरेव बहुभिर्जन्यं पञ्चमम्। दीर्घत्वयोगि दीर्घं ह्रस्वत्वयोगि ह्रस्वम्। आदिपदात् वर्तुलचतुरश्रत्वादयः परिमाणभेदा इति नव्याः।

## पृथक्त्वस्य गुणत्वनिरासः

ननु पृथक्त्वमपि गुणोऽस्ति। नैवम्; अन्योन्याभावेनान्यथासिद्धेः। नन्वत्र सावधित्वमस्ति घटात्पटः पृथगिति। न चान्योन्याभावे तदस्ति। न हि घटात् पटो नेति कस्यचिद्धीरिति चेत्-न; घटाद्भेद इत्यन्योन्याभावेऽप्यवधिप्रतीतेः।

ननु अन्योन्याभावस्य पृथक्त्वे 'अन्यारादितर्ते' इत्यत्र घटात्पृथक् पटाद्भिन्न इतिवत् घटात्पटो नेत्यपि स्यात्। तत्सूत्रेऽन्यपदस्य नञ्भिन्नान्योन्याभाववदर्थकपदपरत्त्वात्। घटादन्य इत्यत्रान्योन्याभावसंशयनिवृत्तिस्तद्व्याप्यपृथक्त्वनिश्चयादेव। रूपाद्रसः पृथक् घटाभावात्पटाभावः पृथगिति प्रतीतेश्च न गुणः। किञ्च घटात् पृथगिति पञ्चम्याः प्रतियोगित्वमेवार्थः, नावधित्वम्। अस्तु वाऽन्योन्याभावोऽपि प्रतीतिवशात् सावधिः। अतः पृथक्त्वं न गुण इति सिद्धम्।

## विभागस्य गुणान्तरत्वशङ्का तन्निरासश्च

ननु विभागोऽपि गुणान्तरमस्ति। न च संयोगाभाव एव सः, वैपरीत्यापत्तेः। किञ्च सोऽपि न प्रागभावः, संयोगात्प्राग्विभक्तप्रत्ययाभावात्। नात्यन्ताभावः गुणादावपि प्रसङ्गात्। अवयवावयविनोर्हिमवद्विन्ध्ययोश्च विभक्तप्रत्ययापत्तेश्च। न ध्वंसः, विभज्य संयुक्तयोर्विभक्त प्रत्ययापत्तेः। न यावत्संयोगध्वंसः, अग्रिमसंयोगात्पूर्वं तदनापत्तेः। असम्भवाच्च। न तत्संयोगध्वंसः, आश्रयनाशजे संयोगध्वंसे विभागप्रत्ययापत्तेः, इदमस्माद्विभक्तमिति सावधिप्रत्ययाच्च। न हि ध्वंसे सोऽस्ति। किञ्च यथा तन्तुसंयोगस्य विभागाभावत्वेन हेतुत्वे गौरवाद्भावत्वेन तत्त्वमिति संयोगसिद्धिस्तथा वंशदलविभागजशब्दे लाघवाद्भावरूपविभागसिद्धिः। न च दलद्वयक्रियानन्तरं तत्तद्देशसंयोगादेव शब्दोत्पत्तिः न तु विभागादिति वाच्यम्, क्रियानन्तरं विभागपूर्वसंयोगनाशयोरसत्त्वेन संयोगाभावात्।

---

1. त्रुटिगतम् त्र्यसरेणुगतमित्यर्थः।

अत्र ब्रूमः–उत्तरदेशसंयोगफलकपूर्वसंयोगध्वंस एव विभागः। न च शब्द-कारणत्वात्तत्सिद्धिः, वंशदलाकाशसंयोगस्य क्रियाया एव वा तत्त्वात्। न च विभागपूर्वसंयोगनाशाभ्यां व्यवधानान्न क्रियाहेतुरिति वाच्यम्, एतत्क्रमस्य कुल-धर्ममात्रत्वात्, विभागपूर्वसंयोगनाशोत्तरदेशसंयोगानामेकक्षणोत्पत्तौ बाधका भावात्। उत्तरसंयोगो वा शब्दहेतुः।

वस्तुतस्तु ध्वनिशब्दोऽपि नित्य एवेति न विभागापेक्षा, अभिव्यञ्जकन्तु क्रिया, संयोगो वाऽस्तु। तस्मात्संयोगाभाव एव विभागः।

## संयोगनिरूपणम्

संयोगः संयुक्तधीहेतुः। स द्वेधा–नित्योऽनित्यश्च। कालाकाशादेर्नित्यः। स च प्रागुक्तः। अन्त्यो द्विधा अन्यतरकर्मजः उभयकर्मजश्चेति। आद्यः श्येन-क्रियया स्थाणोस्संयोगः। अन्त्यो मल्लयोर्मेषयोर्वा संयोगः। यत्तु कश्चिदाह—संयोगजोऽपि संयोगोऽस्ति। यथा हस्ततरुसंयोगात् कायतरुसंयोग इति, तन्न; अवयवावयविनोरेकसंयोगेनोपपत्तौ संयोगान्तरे मानाभावात्। किञ्च तुर्यास्तन्तु संयोग एव परसंयोगः, तयोस्तादात्म्यात्। **उक्तं चैतत्पार्थसारथिना**

ननु (संवोगजसंयोगाभावेन) चोत्पन्ननिष्क्रियघटे अन्यतरकर्माद्यभावात् संयोगज एव संयोगो वाच्यः, अन्यथा भूतलसंयोगधीर्न स्यात्। नैवम्; अवयव-संयोगेन तत्सम्भवात्, निष्क्रियघटे भूसंयोगाप्रसिद्धेश्च। संयोगे कर्मजत्वभिन्न संयोगजन्यतावच्छेदकजात्यन्तरे मानाभावाच्च। एतेन विभागे विभागत्वं प्रत्यूढम्। विभागस्य निरासाच्च। स च संयोगः संयोगिद्वयनिष्ठ एक एवेति तार्किकाः। प्रतिसम्बन्धिभिन्न इति भाट्टाः। अन्यथा पृथक्त्वान्योन्याभावानां भेदो न स्यात्। अथ सम्बन्धितावच्छेदकभेदाद्भेदः, स संयोगेऽपि तुल्यः।

ननु संयोगे नाश्रयकर्मत्वेन हेतुता, श्येनकर्मणा वृक्षसंयोगायोगात्। न प्रतियोगिकर्मत्वेन, श्येने वृक्षनिरूपितसंयोगानुपपत्तेः। तेन निरूपककर्मत्वेन हेतुत्वे तावदुभयनिरूपितस्संयोग एक एवेति चेत्–न; सामान्यतः कर्मत्वेन हेतुत्वे प्रतियोगित्वादिना विशेषतः कारणत्वात्। यथा सादृश्यं प्रतिधर्मिभिन्नं तथा संयोगोऽपि भिन्न इति **पार्थसारथिः**।

## बुद्धिः

बुद्धिर्ज्ञानम। सा द्विधा-अनुभवः स्मृतिश्च। अनुभवो द्विधा-यथार्थोऽयथार्थश्च। आद्यः प्रमाणजन्यः। सैव प्रमा। तत्करणम्–अनधिगतार्थगन्तृ प्रमाणम्। अत एव स्मृतेरनुवादवाक्यस्य चाप्रामाण्यम्। अन्ये त्वबाधितार्थत्वं प्रामाण्यं स्मृतावपि। अन्यथा प्रत्यभिज्ञायां का क्षतिरित्याहुः। धारावाहिकज्ञाने कालस्य षडिन्द्रिय-वेद्यत्वेन क्षणादेः प्रत्यक्षत्वात् आप्रहरं ज्ञानैक्येन धाराभावाद्वाऽनधिगतत्वम्। तानि च प्रमाणानि षट्। प्रत्यक्षानुमानोपमानार्थापत्त्यभावशब्दाख्यानि।

## प्रत्यक्षप्रकरणम्

तत्र सदर्थेन्द्रियसंयोगजं ज्ञानं प्रत्यक्षम्। अत एव न भ्रमः प्रत्यक्षम् अर्थासत्त्वात्। न वा योगिप्रत्यक्षम्, इन्द्रिजत्वाभावात्, योगिसत्त्वे मानाभावाच्चेति वार्तिके। तथा च सूत्रम्—'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' जै० सू० १.१.४ इति।

केचित्तु अपरोक्षप्रमात्वं प्रत्यक्षत्वमाहुः। तच्च 'ज्ञानवृत्तीति सूत्रे तत्करणवृत्तीत्यन्ये। करणञ्चेन्द्रियम्, तदर्थसंनिकर्षो ज्ञानं चेति केचित्। सर्वत्रेन्द्रियमेव करणं निर्विकल्पकज्ञानमिति वयम्। तत्रेन्द्रियजं ज्ञानं द्विधा-निर्विकल्पकं सविकल्पकञ्चेति। स्पष्टञ्च वार्तिके—'विशिष्टज्ञानहेतुत्वान्निर्विकल्पकमुच्यते'। तच्च संसर्गानवगाहि ज्ञानम्। वैशिष्ट्यावगाहिज्ञानमन्त्यम्। तत्करणमिन्द्रियं न संनिकर्षादि। सविकल्पकस्यापि हानोपादानापेक्षाबुद्धयः फलम्। तथाच प्रमाणानां त्रैफल्यमुक्तं वार्तिके।

तानि चेन्द्रियाणि घ्राणरसनचक्षुश्श्रोत्रत्वङ्मनांसि षट्। तत्सन्निकर्षश्चतुर्धा—संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः विशेषणविशेष्यभावश्चेति। यद्यपि चक्षुस्संयुक्तकपाले घटसमवायोऽस्ति, तथापि कपाले घट इति ज्ञानेऽस्तु तथा तदभावे तु संयोग एव। एवं श्रोत्रेण शब्दग्रहणं संयोगेनैव, शब्दस्य द्रव्यत्वात्, श्रोत्रस्य दिगात्मकत्वात्। द्वितीयो रूपरसादिग्रहे शब्दत्वग्रहे च। तृतीयो रूपत्वादिग्रहे। चतुर्थोऽभावग्रहे। अनुपलब्ध्याऽभावग्रहस्तु स्थलविशेषे न सर्वत्रेत्युक्तं प्राक्। समवायश्चात्र तादात्म्यम्। तदन्यस्य पूर्वं निरस्तत्वात्॥

इति प्रत्यक्षम्

## अनुमानम्

अथानुमानम्। तच्चानुमितिकरणम्। व्याप्तिज्ञानत्वेन तज्जन्यं ज्ञानमनुमितिः। तेन व्याप्तिज्ञानानुव्यवसाये नानुमितित्वम्, तत्त्वेनाजन्यत्वात्। अनुमितिकरणञ्च लिङ्गस्य परामर्शरूपं तृतीयं ज्ञानमिति केचित्। अन्ये तु व्यापारवत्त्वाभावेनाहेतुत्वाद्व्याप्तिज्ञानं तत्संस्कारो वेत्याहुः। न चानुमितेर्व्याप्तिसंस्कारजत्वात् स्मृतित्वम्। संस्कारध्वंसेऽपि तत्त्वापत्तेः। तेन संस्कारमात्रजन्यत्वं स्मृतित्वम्। तेनायं धूमवानिति पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवजसंस्कारोद्बोधे वाऽनुमितिः न तु व्याप्तिस्मृतिः, न वा वह्निव्याप्य धूमवानयमिति ज्ञानं हेतुः, गौरवान्मानाभावाच्च। पर्वतो वह्निमानिति ज्ञाने वन्ह्यंशेऽनुमितित्वं तत्रैव व्याप्तिज्ञानं हेतुः पर्वतांशे तु इन्द्रियजन्यत्वात्प्रत्यक्षमेव। जातिसङ्करस्तु न दोषः। व्याप्तिश्च—सर्वसाधननिष्ठसाध्यसामानाधिकरण्यम् अत एवातत्त्वान्न व्यतिरेकयोर्व्याप्तिः। सा च व्यभिचाराज्ञानसहकारदर्शनाभ्यां गृह्यते सहचारधीश्च भूयस्सकृद्वाऽस्तु। तच्चानुमानमन्वयिरूपमेव, न तु व्यतिरेकिरूपम्। साधनेन साध्यानुमितौ साध्याभावसाधनाभावव्याप्तेरनुप-

योगात्। न ह्यभावयोर्व्याप्तौ भावस्य साध्यसामानाधिकरण्यं तत्पक्षधर्मतया वाऽनुमितिर्घटते। एतेन व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते प्रतियोग्यनुयोगिभावो वा नियामक इति तार्किकदुराग्रहः परास्तः। नापि व्यापकभूताभावप्रतियोगित्वम्, तच्च केवलव्यतिरेकिण्यपि सुलभमेवेति वाच्यम्, केवलान्वयिन्यप्रसिद्धेः। न च क्वचित् साध्यसामानाधिकरण्यम् क्वचित् व्यापकीभूताभावप्रतियोगित्वम्, तयोश्च व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेन कारणत्वादननुगमोऽन्यतरत्वेन तत्त्वं वेति वाच्यम्, साध्याभाववद्गामित्वरूपव्यभिचाराभावज्ञानादभावद्वयगर्भात्सर्वसाध्यसहचारस्यैव हेतुत्वेऽतिलाघवात्। **व्याप्यभूता** (व्यापकीभूता) भावप्रतियोगित्वस्य व्यापकत्वेन व्याप्तिग्रहाधीनत्वादन्योन्याश्रयात्माश्रयादिदोषात्। व्यभिचारज्ञानस्य ग्राह्याभावगोचरतया प्रतिबन्धकत्वेन तदभावस्योक्तदिशाऽहेतुत्त्वाच्च। उभयत्र व्यभिचाराभावज्ञानसत्त्वेन भ्रमप्रमानुमित्योर्भेदाभावाच्च। वस्तुतो व्यभिचारतदभावसत्त्वाभ्यामेव हि तयोर्भेदः प्रमाणाभासत्त्वञ्च तर्कस्तु सर्वत्र तुल्यः। आहार्याभावज्ञानस्य सर्वत्र सम्भवादिति दिक्। अतः क्वचिद्व्यतिरेकव्याप्त्या साध्यधीरर्थापत्त्या न त्वनुमानात्। अत एवार्थापत्तिः प्रमाणान्तरम्।

तच्चानुमानं द्विविधम्-स्वार्थं परार्थञ्च। आद्यमुक्तम्। परार्थं त्र्यवयवम्। ते च प्रतिज्ञाहेतूदाहरणरूपाः, उदाहरणोपनयनिगमनरूपा वा। न तु पञ्च, त्रिभिरेवानुमितिसम्भवेऽधिकद्वयवैयर्थ्यात्। एतत्पार्थसारथिना वरदराजेन चोक्तम्।

## उपमानम्

अथोपमानम्। सादृश्यप्रमाकरणमुपमानम्। ग्रामे गां दृष्टवतो वनं गतस्य पुंसो गवयेन्द्रियसन्निकर्षेण गोसदृशोऽयं पिण्ड इति धीरस्ति। सा करणम्। तत एतत्सदृशी मदीया गौरिति गोनिष्ठसादृश्यज्ञानं फलम्। सैवोपमितिः। न चेदं प्रत्यक्षम्, गोरिन्द्रियासन्निकृष्टत्वात्। गवयनिष्ठसादृश्यस्यातल्लिङ्गत्वान्नानुमानम्। यद्यपि मदीया गौः एतत्सदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात्, यो यन्निष्ठसादृश्यप्रतियोगी स तत्सदृशः, यथा मैत्रसदृशश्चैत्र इत्यनुमानसम्भवः, तथाप्येतत्सदृशी मदीया गौरित्यनुभवादुपमिनोमीत्यनुव्यवसायाद् ([1]व्याप्त्यप्रतिबन्धनाच्च ?) मानान्तरम्। तार्किकाश्च गवयशब्दवाच्योऽयमित्युपमितिः। तत्करणं गोसादृश्यविशिष्टं पिण्डज्ञानमाहुः। ते शब्दानुविद्धप्रत्यक्षेऽन्तर्भावादुपेक्ष्याः।

किञ्च-सौर्यादिविकृतौ द्रव्यदेवतादिसादृश्येनोपमानादाग्नेयधर्मप्राप्तिर्दृष्टा। तदुक्तं भाष्यादौ सप्तमे उपमितिलक्षणप्रमाणेन हि सौर्यादावाग्नेयविध्यन्त' इति। व्रीहिसोमादिसादृश्याच्च नीवारपूतीकादौ यागसाधनत्वस्य प्राप्तिः। धूम-

---

१. व्याप्त्यप्रतिबन्धाच्चेति। उपमितेः नियमेन व्याप्तिज्ञानजन्यत्वस्य वक्तुमशक्यत्वादिति भावः।

वत्वेन च यथा महानस इति सादृश्येन पर्वते महानसादिधर्मस्य वह्निमत्त्वस्य प्राप्तिः व्याप्तिविशिष्टात्तद्धीर्न तन्मात्रादित्यन्यदेतत्। न च तत्र वाच्यत्वज्ञानं फलं क्वापि दृष्टम्। न तु गवयशब्दवाच्यत्वं गोर्धर्मः। नापि तत् सादृश्यज्ञान-जन्यम्। अतिदेशवाक्ये हि गोसदृशमुद्दिश्य गवयशब्दवाच्यत्वग्रहो वाक्यजन्यः। शाखादिमान् वृक्ष इतिवत्। अतः कुत्र मानान्तरस्य प्रसरः। अतो 'गौर्न पदा स्प्रष्टव्यः' इत्यादितद्धर्मप्राप्तिरेव फलम्। विशेषो मत्कृतकाव्यप्रकाशटीकायां दशमोल्लासे ज्ञेयः। एवं 'समानमितरच्छ्येनेन' 'सर्वं गङ्गासमं तोयम्' सिंहेन तुल्यं (शेप्यं षं ?) स्यात्' इत्यादौ ज्ञेयम्।

## अर्थापत्तिः

अथार्थापत्तिः। सा चोपपाद्यज्ञानादुपपादककल्पनम्। येन विना यन्नोपपद्यते तदुपपाद्यम्। तज्ज्ञानं करणम्। रात्रिभोजनं विना दिनेऽभुञ्जानस्य पीनत्वमनु-पपन्नमित्युपपाद्यम्। अनुपपन्नत्वञ्च तदभावव्यापकाभावप्रतियोगित्वम्। रात्रि-भोजनाभावे हि दिनेऽभुञ्जानस्य पीनत्वाभाव इति स व्यापकः। रात्रिभोजनमुप-पादकम्। रात्रिभोजनस्यार्थापत्तिः कल्पना। पीनत्वज्ञानं करणम्, तेनार्थस्यापत्तिः कल्पना यस्मादित्यर्थः। सेयं दृष्टार्थापत्तिः। यत्र यागस्य स्वर्गसाधनत्वं श्रुतं क्षणिके तदयोगाद् अपूर्वं कृत्वेति शब्दः कल्प्यते सा श्रुतार्थापत्तिः। यथा जीवं-श्चैत्रो गृहे नेति श्रुते गृहासत्त्वे बहिस्सत्त्वं कल्प्यते इत्यभिहितानुपपत्तिरित्युच्यते। यत्र त्वर्थाभिधानार्थं पदं कल्प्यते, यथा द्वारमित्यत्र पिधेहि इति। यथा वा विश्वजिति स्वर्गकाम इति सा अभिधानानुपपत्तिः। न चेयमनुमानेऽन्तर्भवति, अन्यथाभावात्। व्यतिरेकी च नानुमानमित्युक्तम्। अत एवार्थापत्तौ नानुमिनो-मीत्यनुव्यवसायः। किन्तु कल्पयामीति। अतो गन्धवत्त्वेनेतरभेदः पृथिव्या अर्थापत्त्यैव।

इत्यर्थापत्तिः

## अनुपलब्धिः

अथानुपलब्धिः। सा च मानान्तराजन्याभावप्रमाकरणम्। अतीन्द्रियधर्मा-द्यभावप्रमाकरणेऽनुमानेऽतिप्रसङ्गान्मानान्तराजन्येति। अभावस्मृतिहेतौ संस्कारे-ऽतिप्रसङ्गोऽतः प्रमेति। धर्माद्यनुपलब्ध्या तदभावानिश्चयात् योग्यानुपलब्धिर-भावग्राहिका। ननु न योग्यस्यानुपलब्धिः, स्तम्भे पिशाचादिभेदस्याप्रत्यक्षत्वा-पत्तेः। नापि योग्येऽधिकरणे प्रतियोग्यनुपलब्धिः। आत्मनि धर्माद्यभावस्य प्रत्य-क्षतापत्तेः। मैवम्; योग्या चासावनुपलब्धिश्चेत्यर्थः। तस्या योग्यता च तर्कित-प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम्। घटाभावस्य प्रतियोगी घटः, तस्य तर्कितं यत् सत्वं तेन प्रसञ्जित आपादितः प्रतियोगी उपलब्धिरूपो यत्र यद्यत्र घटस्स्यात् उपलभ्येतेत्येवमित्यर्थः। आत्मनि धर्मादेर्देशान्तरीयघटादेश्चातीन्द्रियत्वेनोपल-

म्भापादनाभावादनुपलब्ध्याऽभावग्रहः। न चेन्द्रियमेव तत्र हेतुः। तस्याभावेन[1] सन्निकर्षाभावात्। इन्द्रियान्वयव्यतिरेकयोश्चाधिकरणज्ञानोपक्षीणत्वेनाहेतुत्वात्। अत एव देशान्तरीयघटस्यानुपलब्ध्या नाभावग्रहः, अधिकरणग्रहाभावात् योग्यत्वाभावाच्च। विशेषणत्वादेश्च स्वरूपभिन्नत्वाभावात्। अनुपलब्धेश्चाभावग्रहे हेतुत्वं क्लृप्तम्, करणत्वमात्रं कल्प्यमिति दिक्।

इति रामकृष्णभट्टात्मजकमलाकर
भट्टकृते मीमांसाकुतूहले पदार्थ
तत्त्वं समाप्तम्।

**अथ शब्दः**

श्रीरामं पितरौ नत्वा कमलाकरशर्मणा।
पदार्थतत्त्वमुक्त्वाथ शब्दतत्त्वं निरूप्यते।

अबाधितार्थसंसर्गविषयं वाक्यं शब्दः। वाक्यञ्चाकाङ्क्षायोग्यतासन्निधिमदर्थकानां पदानां समूहः। तत्राकाङ्क्षा परस्परजिज्ञासाविषयत्वम्। यथा क्रियाश्रवणे कारकस्य। तच्छ्रवणे वा तस्या जिज्ञासा। पदानामपि ह्यर्थद्वारैवाकाङ्क्षादिमत्वम्। अतोऽर्थेष्वेवोक्ततात्पर्यविषयसंसर्गाबाधो योग्यता। अत एवार्थवादे वपोत्खननबाधेऽपि[2] तात्पर्यविषयप्राशस्त्याबाधात् योग्यताऽस्त्येव। सन्निधिः पदोपस्थाप्यत्वम्। अत एव शब्दाध्याहारः। द्वारं 'ईषे त्वा' इत्यादौ पिधेहि छिनद्मि इति। न त्वर्थाध्याहारः पदजन्यपदार्थज्ञानस्य कारणत्वात् अन्यथोहोच्छेदापत्तेः[3]। पदञ्च सुप्तिङन्तम्, न वर्णसमूहः, अकाशादावव्याप्तेः। ख ड ढ थ इत्यादावतिव्याप्तेश्च। नापि शक्तं पदम्, दण्डेऽपि[4]तदापत्तेः। नाप्यर्थप्रत्ययानुकूलशक्तिमत्वम्, धूमेऽपि[5] तदापत्तेः। नापि वर्णत्वे सति तत्त्वम्, घटमित्यत्र प्रकृतिप्रत्ययोः प्रत्येकं पदत्वापत्तेः। अत्र तार्किका इष्टपत्तिमाहुः। प्रकृतिप्रत्ययोः प्रत्येकं गमकत्वात्प्रत्येकमेव पदत्वमिति।

**अस्मद्गुरवस्त्वाहुः**—प्रकृतिप्रत्यययोर्यद्यपि प्रत्येकं शक्तिरव्यभिचारात्, तथापि केवलयोरप्रयोगात् अर्थगमकत्वं मिलितयोरेव। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति 'न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय' इति स्मृतेः केवलस्यासाधुत्वेनावाचकत्वात्। या तु केवलप्रातिपदिकात्तद्धीः सा शक्तिजत्वभ्रमात्। साधु-

१. तस्य—इन्द्रियस्य।

२. 'स आत्मनो वपामुदखिदत्' इति वाक्येन स्ववपोत्खननरूपस्य बाधितार्थप्रतिपादनात् तत्र योग्यतां प्रतिपादयति—तात्पर्येति।

३. प्रकृतितो विकृतौ समागतस्य अग्नयेपदस्य 'सूर्याय' इत्यन्यथानयनं क्रियते। स ऊहोऽर्थाध्याहारपक्ष उच्छिन्नः स्यात्।

४. घटोत्पादनशक्तिमत्वाद्दण्डस्य काष्ठस्य पदत्वापत्तिरित्यर्थः।

५. वह्निरूपार्थप्रत्ययानुकूलशक्तिमत्वाद्धूमस्य पदार्थस्य पदत्वापत्तिरित्यर्थः।

शब्दोपस्थित्या वा गाव्यादिशब्दवत्। न च सुप्तिङन्तमिति प्रत्येकसमुदायाभ्यां व्यभिचारोऽसम्भवो वा, विभक्त्यन्तत्वेन पदत्वात्।

**यत्तु नव्याः**—अपभ्रंशे भाषाप्रबन्धादौ सङ्केतशब्दे च शाब्दबोधदर्शनात्पदत्वं वाक्यत्वं वाऽस्त्येवेत्याहुः। ते 'अन्यायश्चानेकशब्दत्वम्' इति न्यायानभिज्ञाः व्याकरणवैयर्थ्यापत्तेर्म्लेच्छप्रसिद्धशब्दतदर्थग्रहणापत्तेर्वेदविप्लावका एव। न च गाव्यादावीश्वरेच्छरूपा शक्तिः,[1] तेषामव्यवस्थितेः। नेतरस्य कर्तुरज्ञानात्। न प्रयोक्तुः, ततः पूर्वं तदनापत्तेस्तेषामानन्त्याद्व्यभिचाराच्च। किं बहुना? सङ्केतशब्दे शङ्खघण्टादिध्वनावपि वाचकत्वापत्तिः। तेन भाषायां शक्तिजत्वभ्रमात् शाब्दत्वं साधुशब्दोपस्थित्या वा।

तच्च पदं नित्यम्, वर्णात्मकत्वात्। तेषाञ्च नित्यत्वात्। स एवायं गकार इति प्रत्यभिज्ञया नानात्वानित्यत्वयोर्बाधात्। न च जातिविषया सा, तदसिद्धेः। अनन्तवर्णतत्प्रागभावध्वंसजातिप्रत्यभिज्ञाभ्रान्तिकल्पनागौरवाच्च। न च द्रुततारमन्द्रत्वादिभिर्भेदः, तस्य वर्णाभिव्यञ्जकध्वनिधर्मत्वात्। तदुक्तं वार्तिके—

'तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते।
व्यक्तिलभ्यञ्च नादेभ्य इति गत्वादिधीर्मृषा'॥ (श्लो.वा.स्फो.वा. ३६५)

यत्प्रत्यभिज्ञादिकं व्यक्तिलभ्यं भेदादि, क्रमोऽपि ध्वनिकृत एव यथोक्तम्—

'तद्वशेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः।
एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थितान्।
वर्णा अनुपतन्तस्स्युरर्थभेदावबोधकाः'॥
(श्लो. वा. पृ. ५७०)

न च गोत्वाद्युच्छेदः, ध्वनिवद्भेदकाभावेन व्यक्तीनामेव भेदात्। वर्णानां नित्यत्वेऽपि एकस्मृत्युपारूढतया पदरूपो वाक्यरूपश्च समुदायः।

ननु—

सोदीर्णो मूर्ध्न्यभिहतोरस्तमापद्य मारुतः।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः॥

इति शिक्षोक्तेः ध्वनीनां वायवीयानां श्रोत्रासम्बन्धात् कथं वर्णेषु तद्धर्मारोपः? न, तेषामपि श्रोत्रत्वात्।

तदुक्तं—'नादेन संस्कृताच्छ्रोत्रात् यदा शब्दः प्रतीयते।
तदुपश्लेषतस्तस्य बोधं केचित् प्रचक्षते॥'

यद्वा—नादानामतथात्वेऽपि तद्धर्माणां श्रोत्रे आरोपात्। एतच्च
(श्लो. वा. स्फो. वा. ३६९)

नैव वाग्ग्रहणं तेषां शब्दे बुद्धिस्तु तद्वशात्। (श्लो. वा. पृ. ३६७)

इत्यादिना वर्तिके उक्तम्। न च ध्वनिधर्मत्वे बहुभ्रमकल्पनापत्तिः, वीचीतरङ्गन्यायादिनानाविधकल्पनायास्तवापि तुल्यत्वात्। न च क्रमे दीर्घत्वादिवि-

१. तेषां गाव्यादिपदानामित्यर्थः।

शिष्टानां बाधकत्वात्तेषामनित्यत्वाच्च शब्दानित्यत्वम्, प्रवाहानादित्वेन पदानादित्वात्। पूर्वपूर्वक्रमवशादुत्तरः प्रयोगः न त्विदम्प्रथमः, वक्तुः स्वातन्त्र्याभावात् वेदनित्यत्वम्। तदुक्तम्—

'अन्यथानुपपत्त्यातस्सर्वथा पदनित्यता' इति।

(श्लो. वा. शब्दनित्यत्वाधि. ३०८)

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति च।

(श्लो. वा. शब्दनित्यत्वाधि. २४०)

तत्सिद्धं शब्दनित्यत्वम्।

## वेदापौरुषेयत्वम्

एतेन वेदस्यापौरुषेयत्वं व्याख्यातम्। तथाहि तत्र नित्यविभूनां वर्णानां स्वतः क्रमशून्यत्वादुच्चारणक्रमप्रवाहस्यानादित्वादपौरुषेयत्वम्। वेदान्तिनस्तार्किकाश्च 'शास्त्रयोनित्वात्' इत्यादिसूत्रे 'यस्य निश्वसितं वेदाः' 'ऋचस्सामानि जज्ञिरे' 'छन्दाँसि जज्ञिरे तस्माद् यजुस्तस्मादजायत' इति 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्यादिश्रुतिस्मृतिबलादीश्वरकर्तृकं वेदमाहुः।[1] उपलभ्य रचितत्वाभाव एवापौरुषेयत्वम्। तथा च श्रुतिः—'धाता यथापूर्वमकल्पयत्, इति। **कल्पतरौ च**—'कर्त्तापि ब्रह्म वेदस्य न पूर्वक्रमतोऽन्यथा।

क्रमं करोति वाग्वज्रपातो मा भून्नृणाम्, इति।

भाट्टास्तु—नेश्वरस्य वेदकर्तृत्वम्, अर्थज्ञानं हि वाक्यप्रयोगे हेतुः। न चेश्वरस्य वेदादृते धर्मरूपार्थज्ञानं समस्ति, वेदं विना तत्सत्वे मानाभावात्। न चेश्वरज्ञानात्तत्सिद्धिः, अन्योन्याश्रयात्। खपुष्पादेरपि सिद्ध्यापत्तेश्च। प्रमाणान्तरेण लब्धसत्ताकं हि ईश्वरज्ञानगोचरः, न तु तेन वस्तुसिद्धिः वाक्यरचनाया हेतुभूतं तदर्थज्ञानं कल्प्यत इति चेत्-न; अन्योन्याश्रयात्। सकर्तृकत्वे सिद्धे हेतुभूतार्थकल्पना, तथा च सकर्तृकत्वमिति। वाक्यत्वात्सकर्तृकत्वानुमानमिति चेत् न; धर्मस्यार्थस्यालौकिकत्वेनोपलम्भायोगात् उपलभ्य रचितत्वाभावेन बाधात्। उपलभ्य रचितत्वस्य साध्यव्यापकत्वेन बालशुकादि वाक्ये साधनाव्यापकत्वेनोपाधित्वाच्च। न च सर्वज्ञत्वात्तद्धीः, अलौकिकमानाभावेन तदसिद्धेः, वस्त्वसिद्धेश्च। अनादिप्रवाहेण पदानुपूर्वीसम्भवात्, अन्यथा कल्पसूत्रादेर्नित्यविधि[2]विषयत्वायोगे 'तुग्रोह भुज्युम्' इत्यादौ नानादेवर्षिराजचरित्रादौ चानित्यसंयोगस्येश्वरकर्तृकत्वेऽप्यपरिहारात्। न हि कल्पसूत्राद्यनन्तरं वेद ईश्वरेण

१. अर्थमुपलभ्येत्यर्थः।

२. अध्ययनं त्रिविधम्—ग्रहणाध्ययनं धारणाध्ययनं जपाध्ययनञ्चेति। तत्र जपाध्ययनं ब्रह्मयज्ञे विहितम्। अधीतेषु वेदेषु कियान् भागः प्रत्यहं नियमेन पठनीयः। सोऽयं ब्रह्मयज्ञविधिः नित्यविधिः। तत्र ऋगादिवेदैस्सह कल्पानां सूत्रादीनामपि पठनीयत्वेन विधिरस्ति। तद्विषयत्वमित्यर्थः।

कृतः न च भविष्यतो निर्देशः, 'अवाहाः तस्य ह शतं जाया बभूवुः' इत्यतीत-निर्देशायोगात्। तत्र प्रवाहानादित्वै तदेवास्तु। तदुक्तम्—

वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा। इति।

न चैवं बौद्धग्रन्थस्यापि नित्यत्वापत्तिः, तत्र दृढकर्तृस्मृतेः। 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद' इति श्रुतेरत्रापि कर्तृस्मृतिरिति चेन्न; तस्याः कठादिवत् प्रवचननिमित्तत्वादुपासनापरत्वाद्वा। अन्यथा कर्तृषु विप्रतिपत्तिर्न स्यात्। केचिद्धीश्वरकर्तृकमाहुः। केचित्प्रजापतिकर्तृकम्। केचिद्ब्रह्मादिकर्तृ-कम्। न हि भारतादौ क्वचिदेवम्। अस्यापि वेदत्वात् स्वेनैव स्वस्येश्वरकर्तृक-त्वबोधने आत्माश्रयात्। बौद्धवाक्यप्रतिबन्द्या दुरुद्धरत्वाच्च। वक्तृदोषशङ्कया संवादापेक्षणादाप्तत्वानिश्चयाद्वेदवाक्यादेव तत्त्वेऽन्योन्याश्रयाच्च। बौद्धवाक्येऽति-प्रसङ्गाच्च। सदर्थविषयात्वादबाधाच्च प्रामाण्यम्। भ्रमे दोषेण तस्य प्रतिबन्धः। अन्यथा धर्म्यंशे प्रामाण्यायोगात्। बौद्धवाक्ये तु नैवम्, तैः पौरुषेयत्वोक्तेः। तदुक्तम्—

"स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्यन्ताःस्मर्तारोऽस्य न कारकाः॥" इति।

तथाच श्रुतिः 'तस्मै नूनमाभिद्यवे नमस्करोमि वाचा विरूपनित्यया' इति। आगमोऽपि

'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा' इति। बह्वृचब्राह्मणेऽपि— 'इमान् लोकानसृजत् पृथिवीमन्तरिक्षं दिवमित्यादित्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवः तानि ज्योतींष्यभ्यतपन् तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोस्सामवेद आदित्यात्, इत्युक्तम्। अतएव 'प्रजापतिरकामयत' इत्युक्त्वा 'तस्मात्तेपानात्त्रयो देवा असृज्यन्त, अग्निर्वायुरादित्य इति, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेदः' इति श्रुतौ देवानां कर्तृत्वं श्रुतं नेश्वरस्य। एतेन 'ऋचस्सामानि जज्ञिरे' इति श्रुतिविरोधात् सर्ववेष्टनस्मृतिवन्नि-त्यत्वबोधकस्मृतेरप्रामाण्यमिति वदन् गौडरुद्रः परास्तः। बहुविरोधेऽस्यैव प्रवच-नपरत्वादिति दिक्।

शब्दार्थसम्बन्धश्च शक्त्याख्यो नित्यः। अतएव जातिरर्थः, न व्यक्तिः अनित्यनित्यसम्बन्धायोगात्। स चान्त्यवर्णनिष्ठः। तदुक्तं भाष्ये 'पूर्वपूर्ववर्णज-नितसंस्कारसहितोऽन्त्यो वर्णो वाचकः' इति। वार्तिके तु सर्ववर्णेष्वप्युक्तः।

'अन्त्यवर्णेऽपि विज्ञाते सर्वसंस्कारकारितम्।
स्मरणं यौगपद्येन सर्वेष्वन्त्ये प्रवर्तते॥
तदारूढास्ततो वर्णा न दूरेऽर्थावबोधनात्'॥ इति।

(श्लो. वा. स्फोट. वा. ११२)

तच्च पदं चतुर्धा—उपसर्ग-निपात-नामा-ख्यातभेदात्। तत्रोपसर्गनिपाताश्च द्योतका न तु वाचकाः। तदुक्तं वार्तिके—

'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
यदर्थद्योतकौ तौ तु वाचकस्स विचार्यते'॥

केचित्तु 'गौश्चाश्वश्च' इत्यादौ गवादेः 'यदग्नये च प्रजापतये च' इति देवतायास्समुच्चयः चार्थः। स चान्यपदान्त एव बोधकः। पदार्थोत्तरे चार्थो विशेणमेव अश्वसमुच्चिता गौरिति। न तु गोस्समुच्चय इत्याहुः।

अन्ये तु भिन्नान्वयव्यतिरेकाभावात् पृथक्पदार्थयोश्च षष्ठ्यादिकं विनाऽन्वयाभावात् निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति कातीयवार्तिकाच्च द्योतकत्वमेवेत्याहुः।

अथ नामार्थः। स त्रिधा—शक्यो लक्ष्यो गौणश्चेति वृत्तिभेदात्। एवं शब्दोऽपि। तत्र घटादिपदानां जातौ शक्तिः न व्यक्तौ। सा चेश्वरेच्छेति तार्किकाः। तन्न; इच्छायाः क्वापि सम्बन्धत्वादर्शनात्। पदार्थान्तरमिति भाट्टाः। तत्र विशिष्टासु शुद्धासु वा व्यक्तिषु न सर्वासु सङ्केतग्रहः। आनन्त्यात्सर्वव्यक्तीनामनुपस्थितेः। न कासुचित्। असङ्केतितासु प्रयोगात्, सङ्केताग्रहाविशेषात् घटपदात् गवादिबोधापत्तेश्च। न सामान्यलक्षणया सर्वधोः, सामान्यस्य वाच्यत्वेन सर्वबोधसम्भवे वह्निविशेषस्य पक्षधर्मतया सम्भवे तत्र मानाभावात्। सत्त्वेऽपि सङ्केतस्य सम्बन्धत्वात् सम्बन्धिनाशे नाशापत्तेः। तेन शब्दार्थौ नित्यौ। व्यक्तौ सन्देहाच्च न शक्तिः। न हि शब्दस्संशायकः। जातिविशिष्टे शक्तौ नागृहीतविशेषणान्यायेन लाघवात्प्राथम्याच्च जातेर्वाच्यत्वात्। ननु शक्यतावच्छेदकाभावात् कथं शब्दान्निर्विकल्पकम्? घटत्वत्वं प्रकार इत्येके। शब्दान्निर्विकल्पकमेवेत्यन्ये। तन्न; पदस्य स्मारकत्वात् स्मृत्यनुभवयोस्समानप्रकारकत्वान्निर्विकल्पकस्मृत्ययोगात्। न च समानविषयतयैव स्मृतिहेतुता न समानप्रकारतयेति वाच्यम्, घटत्वप्रकारकानुभवाद् घटे पटत्वप्रकारकस्मृत्यापत्तेः विशेष्यैक्यात्। प्रत्यक्षोपस्थिता संज्ञैव प्रकार इति तत्त्वम्। ननु शक्यतावच्छेदकाग्रहे कथं शक्यत्वग्रहः। न च शब्द एव तथा, शब्दात्तदभिधाने आत्माश्रयात्। नैवम्, कारणतावच्छेदकभेदात्। यथा विशिष्टज्ञानस्यांशे विशेषणज्ञानत्वेऽपि विशेषणज्ञानजन्यत्वम् [1]एवमत्रापि। विशेषणज्ञानत्वेन कारणता न तु घटशब्दज्ञानत्वेन, घटशब्दात्तच्छब्दानुपस्थितेः। कथं तर्हि प्रकारत्वम्, प्रत्यक्षोपस्थितस्येत्यवेहि। न हि विशेषणाभिधानमपि विशिष्टज्ञाने हेतुः। तदुक्तं भट्टपादैःसर्वत्र ह्यगृहीतविशेषणा विशिष्टे बुद्धिरनिष्टा, न त्वनभिहितविशेषणेति। विशेष्यं नाभिधा

१. शक्यतावच्छेदकविशिष्टशक्यबोधकत्वमेव शब्दस्य, शक्यतावच्छेदकग्रहस्यापि शक्यत्वग्रहं प्रति विशेषणज्ञानत्वेन हेतुतेति भावः।

गच्छेत् क्षीणशक्तिर्विशेषणे इति च। एवमाकाशादिपदेऽपि। ये तु अष्टद्रव्यभिन्नद्रव्यत्वं शब्दाश्रयत्वं वा शक्यतावच्छेदकमाहुः, ते आकाशः अष्टभिन्नद्रव्यं शब्दाश्रय इति सह प्रयोगायोगात् वन्द्याः। ननु व्यक्तेः कथं धीः ? न; आक्षेपात्। शाब्दबोधे पदोपस्थितस्यैव भानात्। मैवम्; लक्षणया शाब्दत्वात् करणत्वादौ व्यक्तिपरिच्छेदद्वारा जातेरमूर्तत्वेऽपि आरुण्यवत् तत्त्वोपपत्तेराक्षेप एव व्यक्तेः। कर्मत्वादौ लक्षणैव। व्यक्तेश्चरमत्वाच्चित्रबुद्धेरभावाद्गौरवाच्च न वाच्यत्वम्। न हि प्रतीतिमात्राद्वाच्यता, लक्षणोच्छेदापत्तेः। न च व्यक्तेर्लक्षणया धीसम्भवे वाच्यता।

नन्वाक्षेपे कथं व्यक्तौ बहुत्वाद्यन्वयः, तस्या अशाब्दत्वात् प्रत्ययानां प्रकृत्यर्थान्वितार्थत्वात्। मैवम्; अभेदेन प्रकृत्यर्थत्वात्, लक्षणैव साध्वी। विशेषो मत्कृतकाव्यप्रकाशटीकायां ज्ञेयः।

अथ लक्षणा। सा च शक्यसम्बन्धः। तत्र मुख्यार्थबाधो हेतुः तात्पर्यानुपपत्तिरेव बीजम्। अन्यथा गङ्गायां घोष इति जघन्ये घोषपदे मीने लक्षणा किं न स्यात् ? कुतो वा गङ्गापदे नौकादौ न लक्षणा, तावताप्यन्वयविश्रान्तेः। न च सैन्धवादिपदे लक्षणापत्तेर्नानार्थोच्छेदः, प्रकरणादौ सति तदप्रसरात् तात्पर्यविशेषस्य वा हेतुत्वात्, लवणतत्सम्बन्धबोधाभावात् विनिगमनाविरहाच्च।

न च गङ्गायामिति सप्तम्या सामीप्योक्तेर्न लक्षणा, तत्र तात्पर्ये तथा, अन्यथा लक्षणैव। स च शक्यसम्बन्धः स्मर्यमाणो लक्ष्यधीहेतुत्वात् लक्षणा। केचित्तु लक्षणार्थनिष्ठा वृत्तिः। बाधितेन तेन स्वसम्बन्धितीरबोधनात्, न पदे। तस्य शक्यत्वाभावात् लक्ष्यसम्बन्धाभावाच्च। अर्थवृत्तेः शब्दे आरोपात् शब्दवृत्तित्वमित्याहुः। तन्न; गङ्गापदे सप्तम्ययोगात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् तीरस्य च प्रकृत्यर्थत्वाभावात्, पूरे च तद्बाधात्। शब्दवृत्तौ तु तीरस्यापि लक्षणया प्रकृत्यर्थत्वादाधारत्वं युक्तम्। स्वनिरूपितसम्बन्धस्य सा वृत्तित्वाल्लक्ष्यनिष्ठो विषयतासम्बन्धेन शब्दनिष्ठः। 'कर्मणि कुशलः' 'मण्डपे शेते' इत्यादौ योगार्थबाधान्निरूढलक्षणा। न च पङ्कजपदे तदापत्तिः, योगमात्रे भेकादौ प्रयोगापत्तेः। योगार्थबोधाच्च। तेन तत्र योगरूढिरेव। ननु गङ्गापदे तीरे लक्षणा न युक्ता लक्ष्यतावच्छेदकायोगात्। न हि गङ्गातीरत्वेन तीरधीः, गङ्गांशे शक्त्या लक्षणायोगात्। स्वस्य स्वावृत्तित्वेन गङ्गासम्बन्धस्य गङ्गायामभावाच्च। तीरमात्रबोधस्य निर्विकल्पकापत्तेः। न च शक्त्या पूरस्य लक्षणया तीरस्य संसर्गमर्यादया च संसर्गस्य धीः। विशिष्टधीरार्थ[1]समाजात्। शब्दप्रयोज्यधीविषयत्वाच्च शाब्दत्वं वाक्यार्थवदिति वाच्यम्। लक्षणया निर्विकल्पकापत्तेर्युगपद्वृत्तिद्वयविरोधाच्च।

१. आर्थसमाजात्—अर्थसमूहात्। पूरतीरसंसर्गाणां प्रत्येकं शक्त्या लक्षणया संसर्गमर्यादया च यथासम्भवं बोधे जातेऽपि विशिष्टज्ञानं तत्समूहाज्जायत इति भावः।

यत्तु मणिकारेणोक्तम्—न वृत्तिद्वयविरोधो दूषणम्, गङ्गायां मीनघोषावित्यत्र गङ्गापदस्य शक्यलक्ष्याभ्यां पूरतीराभ्यां साक्षात्परम्परासम्बन्धयोः पूर्वं गृहीतत्वेन तदाहितसंस्कारसत्त्वात्। पदस्य च स्मारकत्वादुभयबोधे बाधकाभावादिति। तन्न; उभयसम्बन्धयोः पूर्वं गृहीतत्वेऽपि तदुपस्थापकं गङ्गापदमेव। तच्च साक्षात् लघुसम्बन्धेन शक्यस्यैवोपस्थापकं न तु परम्परागुरुसम्बन्धेन तल्लक्ष्यस्य, नानार्थे च प्रकरणादिवशाद्विशेषधीर्न स्यात्। पदस्य स्मारकत्वेन शक्त्योभयोर्बोधात्। अथ भोजने सैन्धवपदे अश्वबाधादपरशक्तिप्रतिबन्धः,[1] स इहापि तात्पर्येण पूरबाधात्तुल्यः। किञ्च लक्षणायां बाधः शक्तौ च नेति विरोधः। किञ्च गङ्गायामित्येकत्वानन्वयः, प्रत्ययार्थानां प्रकृत्यर्थान्वितत्वात् तस्य[2] च द्वित्वावच्छिन्नत्वात्। न च प्रत्येकमेकत्वमादाय साधुत्वम्। घटमिति प्रत्येकमेकत्वात् द्वयोर्बहूनां वा प्रतीत्यापत्तेः। न हि सैन्धवमिति प्रत्येकमेकत्वमादाय द्वयोरन्वयः, नानार्थे तात्पर्याभावे च एकत्वात् संशयो न स्यात्।[3] अर्थैकत्वविशेषकृतस्संशयः स इहापि तुल्यः। अस्तु तर्हि गङ्गायां मीनघोषावित्यत्रोभयधीरिति चेत्–न, एकशेषैण गङ्गापदद्वये इष्टापत्तेः। अत एव प्रगल्भाचार्यैर्मीनघोषाविति द्वन्द्वावगतसाहित्यस्यैकत्र बाधात् 'धवखदिरौ छिन्धि' इतिवत् गङ्गायां मीनः घोषश्चेति वाक्यभेद उक्तः। किञ्ज गङ्गाविशिष्टे तीरे लक्षणा, न तु तीरत्वविशिष्ट इति वक्ष्यते। तेन पूरस्य तीरे विशेषणत्वान्मीनान्वये प्रधानत्वाच्च गुणत्वप्रधानत्वविरोधः। सोऽप्यस्तु को दोष इति चेत्–न; दण्डिपदे पुरुषविशेषणस्यापि दण्डस्य प्रधानत्वे दण्डदण्डिनाविति प्रतीत्यापत्तेः। ननु तीरत्वविशिष्टे तीरे लक्षणा, अन्यथा तीरत्वप्रकारकबोधो न स्यात्, किन्तु गङ्गीयमिति स्यादिति चेत्–न; गङ्गापदात् सिन्धुतीरस्य बोधापत्तेः।

किञ्च यया लक्षणया तीरस्तयैव तीरत्वधीः? लक्षणान्तरेण वा? नाद्यः; संयोगसंयुक्तसमवाययोश्शक्यसम्बन्धयोर्भेदेन लक्षणैक्यायोगात्। न च विशेष्ये तीर एव शक्यसम्बन्धापेक्षा न विशेषणे तीरत्वे। वह्नित्वेन सह पृथग्व्याप्त्यभावेऽपि मानान्तरोपस्थितस्य व्यापकतावच्छेदकस्येव तादृशस्यैव लक्ष्यतावच्छेदकत्वादिति वाच्यम्। तर्हि तादृशस्य पूरस्यैव तत्त्वे[4] प्रद्वेषः कुतः? वृत्त्यविषयस्य तीरत्वस्य शाब्दबोधासम्भवात्। लक्षणया निर्विकल्पकापत्तेश्च। नान्त्यः; तीरत्वे भिन्न-

१. सः–अपरशक्तिप्रतिबन्धः। इहापि–गंगायामित्यत्रापि।

२. तस्य च–गङ्गापदार्थस्य द्वित्वावच्छिन्नत्वात्–शक्यार्थपूर-लाक्षणिकतीर-रूपोभयावच्छिन्नत्वात्।

३. अर्थैकत्वविशेषकृतस्संशय इति। सैन्धवादिनानार्थके अनेकेषामर्थानां शक्त्यैव बोधनात्, तेषामर्थानां शक्त्याबोध्यत्वस्य समानत्वात् तेषु अर्थविशेषनिर्णायकतात्पर्याभावे शक्त्यबोध्यत्वरूपसामान्यकृतः अयमर्थोऽन्यो वा इति संशयो यथा जायते तथा गङ्गायामित्यत्रापि शक्तिलक्षणोभयवृत्त्याऽर्थद्वयबोधाङ्गीकारे संशयस्तुल्य इति भावः।

४. तत्त्वे–लक्ष्यतावच्छेदकत्वे।

लक्षणायां तत्रापि लक्ष्यतावच्छेदकान्तरस्य तीरत्वत्वस्य तत्रान्यस्येत्यनवस्यापत्तेः। न च तीरे तीरत्वं तीरत्वे च तीरं प्रकारः। द्वयोर्गुणत्वप्रधानत्वयोर्विरोधात्। न च गोपदे जातिविशिष्टे शक्तिवद्विशिष्टे लक्षणा, विशिष्टेनैकसम्बन्धाभावात्। तद्वरं गङ्गापदे तीरे शक्तिरेव। न चानेकशक्तिकल्पना, नानार्थवदिष्टापत्तेः। अन्यथा तत्रापि लक्षणया नानार्थोच्छेदापत्तेः। न च बाधाबाधाभ्यां भेदः, भोजनेऽश्वबाधेन सैन्धवपदाल्लवणप्रतीतेः अत्रापि बाधस्य तुल्यत्वात् विशिष्टे च शक्तिस्सुलभैवेति नोक्तदोषः। तस्मात् महत्सङ्कटं लक्षणा नामेति।

अत्रोच्यते--न तीरे शक्तिः, पूरे प्रयोगबाहुल्यात् तीरस्यान्यलभ्यत्वात्तीरसम्बन्धेन पूरेऽप्रयोगाच्च। तीरत्वाप्रकारत्वान्मानान्तरबुद्धस्य शाब्दबोधाविषयत्वाच्छक्यस्य चोपस्थितेर्विशिष्टस्य च घटपदे व्यक्तौ लक्षणावदार्थसमाजलभ्यत्वाच्छक्ये लक्षणाऽविषयत्वेऽपि प्रकारत्वोपपत्तेः तीरत्वस्य च वापोतीराद्यतिप्रसक्तेरवच्छेदकत्वायोगात्तात्पर्येण बोधसम्भवात् गङ्गातीरे इत्यनुभवाच्च शक्यस्य प्रकारत्वाद्युक्ता लक्षणा। न च गाङ्गीयमिति बोधापत्तिः, परमते वापीतीरादिनिवृत्तये तात्पर्येण गङ्गाबोधवत् तीरत्वस्य तेनैव बोधात् शक्यस्य वाक्यार्थानन्वयाच्च जहत्स्वार्थेति प्रवादः। किञ्च तीरे संयोगात् तीरत्वे सयुक्तसमवायात् तत्पूर्वकत्वात् तीरविशिष्टतीरत्वे लक्षणापत्तिः। अन्यथा विशेषणज्ञानस्य कारणत्वायोगात्। न च पूरे वृत्तिद्वयापत्तिः। तद्विशिष्टे लक्षणया शुद्धबोधाभावात्। विशिष्टज्ञानांशे विशेषणज्ञानजन्यत्ववत्। शब्दे विरम्य व्यापारेऽपि न दोषः। विशेषो मत्कृतवार्तिकटीकायां काव्यप्रकाशटोकायाञ्च ज्ञेयः।

अथ गौणी। सादृश्यसम्बन्धवती गौणी तदन्यसम्बन्धवती लक्षणा लक्ष्यवाचकपदवती गोणीत्यन्ये। ननु गौणी न वृत्यन्तरम्, मानाभावात्। न च सादृश्यसम्बन्धस्य प्रकारत्वं भेदकम्, गौरयमित्यारोपे सम्बन्धाभावात्। न च तन्त्ररत्नोक्तः पदान्तरसमभिव्याहारो भेदकः अग्निरधीते इत्यादावभावात्। शक्यसम्बन्धस्तु सजातीयगुणत्वं[1] स्वसमवेतसमवेत-समवायि-समवायित्वरूपः परम्परा, न साक्षात्। सिंहक्रौर्यस्य देवदत्तेऽभावाच्च। [2]तद्गुणयो (गासम्भवेन) गौण्यसम्भवात्। उच्यते–नारोपितार्थत्वं गौणत्वम्, ख पुष्पं भवत्सिद्धान्त इत्यादौ खे पुष्पाभावादसत्त्वाच्चारोपायोगात्। गौरयमिति लाङ्गूलादिमत्वाप्रतीतेश्च न लक्षणा, तस्यां सम्बन्धस्याप्रकारत्वात् गौण्याञ्च तत्सत्वात्। यदि चेवं भेदेऽपि लक्षणात्वं तदा परम्परासम्बन्धे तोरेऽपि शक्तिरेव स्यात्। गुणानां भेदाभावात्

१. स्वपदेन सिंहाग्न्यादिर्ग्राह्यः, तत्समवेतं क्रौर्यं, शुद्धयादि तत्समवेतं–क्रौर्यत्वशुद्धित्वादि, तत्समवायि क्रौर्य शुद्धयादि, तत्समवायित्वं देवदत्तमाणवाकादिषु विद्यत इति निरुक्तपरम्परारूपशक्यसम्बन्धः (सजातीयगुणत्वरूपः) देवदत्तादिषु शक्योपपादन इति तत्र लक्षणैव न गौणी इति भावः।

२. तद्गुणस्तु [क्रौर्यादिः] तन्मात्रनिष्ठो नान्यवृत्तिरित्याशयः।

युक्तस्तद्गुणयोगः। तेन सादृश्यसम्बन्धे तस्य प्रकारत्वे उपपदसत्त्वे वा गौणी, न लक्षणा, लक्ष्यवाचकपदवत्वात्। न हि लक्षणायां क्वापि तदस्ति। तदुक्तं वार्तिके–

अभिधेयाविनाभूते प्रतीतिः (प्रतीतिहेतु सम्बन्धः) लक्षणोच्यते।

लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता। इति।

प्रतीतिरिति करणे क्तिन्। प्रवृत्तिरिति पाठे तद्धेतुस्सम्बन्धः। योगादिति ल्यब्लोपः।

अत्रैके––लक्ष्यमाणाः प्रतीयमाना गुणाः, न तु लक्षिता गुणास्तैर्योगः। प्रतीत्यविश्रान्त्या आद्यलक्षणायोगात् युगपद्वृत्तिद्वयविरोधात्, क्रमे च शब्दस्य विरम्य व्यापाराभावात्। अत एव न क्वपि लक्षितलक्षणा। किञ्च लक्षितेऽर्थे लक्षणा? लक्षितशब्दे वा? नाद्यः, लक्ष्यसन्वन्धत्वेन शक्यसम्बन्धाभावात्। न चार्थसम्त्रन्धमात्रं लक्षणा, अतिप्रसङ्गात्। अर्थवृत्तित्वेन शब्दवृत्तित्वाभावाच्च। एतेन द्विरेफपदे सा निरस्ता। लक्षितशक्त्यापत्तेश्च। न च शक्तिशक्त्यापत्तिः; रेफद्वययुक्तान्यपदव्यावृत्तये प्रत्ययार्थकर्मत्वैकत्वान्वयार्थं वाक्यत्वेन च तदावश्यकत्वादित्याहुः। परम्परासम्बन्धेन लक्षणैव लक्षितलक्षणा इत्यन्ये। भट्टसोमेश्वरास्तु सिंहपदे क्रौर्यादिगुणलक्षणा तैर्योगाद्वृत्तिर्गौणी। शब्दे विरम्यव्यापारेऽपि न दोषः। 'आपो वै शान्ताः' इत्यादौ लक्षितलक्षणा वार्तिके स्पष्टैव। तेन सा गौणीतो भिन्नैवेत्याहुः। अन्ये तु द्विरेफादौ न गौणी, उपपदाभावात्। सिंहो देवदत्त इत्यत्र तत्सत्त्वाद्गौणीत्याहुः।

अथ नामपदेषु क्वचिद्विशेष उच्यते। तत्र गौर्गाव इत्यादौ प्रकृतिलक्षितार्थगता सङ्ख्योच्यते। एको द्वौ बहव इत्यादौ सङ्ख्याविशिष्टो धर्मी वाच्यः तेनैकवचनं लिङ्गञ्च युक्तम्। सङ्ख्या च प्रकृत्युपात्तैवानूद्यते। यत्तु कपिञ्जलाधिकरणे भाष्ये 'गौर्गावावित्यत्र प्रकृत्यर्थगतोच्यते। एक इति प्रकृत्यभिहितैव सङ्ख्याऽनूद्यत इत्युक्तम्। तद्विशेषणभूतसङ्ख्यापरमेव, अन्यथा लिङ्गाद्यनन्वयात्। विंशतिर्घटा इत्यादौ एकत्वेन प्रकृत्यर्थस्य सङ्ख्योच्यते, न घटगता, बहुत्वविरोधात्। तेनैकत्वविशिष्टविंशतिसङ्ख्याविशिष्टा घटा इत्यर्थः। ते च विंशत्यादिशब्दाः क्वचित् सङ्ख्येयप्रधानाः यथोक्ते स्थले। क्वचित् सङ्ख्यामात्रप्रधानाः। यथा विंशतिर्गवामिति। तदुक्तम्–स्वभावः खल्वसौ विंशत्यादौ यत्स्वाभिधेयगतां सङ्ख्यां भजन्ते, न द्रव्यगतामिति। अन्ये तु भाष्यदृष्टचाकृतिन्यायेनैकादिशब्देषु प्राग्विंशतेस्सङ्ख्यैवार्थः, अभेदाच्च द्रव्यधीः। धर्मिणामानन्त्येन वाच्यत्वायोगात्। न चैकादिशब्दानां न सङ्ख्यार्थत्वम् एकवचनाद्यैरेव तत्प्रतीतिरिति वाच्यम्। अर्थवत्वाभावेऽप्रातिपदिकत्वापत्तेः।

सर्वनाम्नां ज्ञानप्रकारीभूतधर्मविशिष्टे बुद्धिस्थे शक्तिः। तच्च संनिहितपदान्तरात्प्रकरणाच्चास्तु। यथैको घट इत्यत्र स घट इति। वेदे 'सा वैश्वदेवी' इति। यथा वा 'तमानय' इति प्रकृते। न चैवं सर्वनामवैयर्थ्यम्, तेन विना यत्पदादेः साकाङ्क्षत्वात्। घटादिपदन्तु न व्यर्थम्, तेन विना विशेषालाभात्। तेन पदान्तरसन्निहिते शक्तिः। न च नानार्थत्वम्, उपपदापेक्षत्वात्। उद्देश्यता-

तावच्छेदकावच्छिन्नस्य यावत्त्वं तावत्त्वञ्च यत्तदोः शक्यम्, परोक्षबुद्धिस्थत्वं वा। प्रत्यक्षबुद्धिस्थत्वमिदमेतदोः शक्यम्।

अथ समासार्थः। द्वन्द्वस्येतरेतरयोगः साहित्यं वार्थः। तत्र शक्तिर्लक्षणा वा। तच्चैकक्रियान्वयलभ्यम्। समाहारद्वन्द्वे समुदायोऽर्थः। तेन समुदायाभिप्रायमेकत्वम्। अव्ययीभावे आधारत्वादिकमर्थः। कर्मधारये त्वभेदः। द्विगौ समाहारोऽर्थः। तत्पुरुषे राजपुरुष इत्यादौ षष्ठयर्थे सम्बन्धे तद्वति च लक्षणा। कर्मधारये नोलोत्पलमिति नीलवति यद्यपि सा तुल्या, तथापि निषादस्थपतिमित्यत्र तदभावात् तत्पुरुषाद्बलवत्त्वमित्युक्तं षष्ठे। बहुव्रीहौ चित्रा गावो यस्येति विग्रहोऽन्यैरुक्तः। वार्तिके तु राजपुरुष इतिवत् षष्ठयन्तस्य पुंसो विशेषणत्वात् प्रथमान्तानां गवां प्राधान्यादानयनं स्यान्न पुंसः। तत्पुरुषवत् षष्ठयर्थे लक्षणा च स्यात्। तेन चित्राणां गवामयमिति विग्रहवाक्यमित्युक्तमरुणाणिकरणे। न च चित्रा गावो यस्य स इति पुनः प्रथमान्तबोधः। षष्टयन्तप्रथमान्तयोर्द्वयोः कल्पने मानाभावात् गौरवात् पुरुषसम्बन्धस्य गोष्वप्रतीतेश्च। यत्तु महाभाष्ये–'अप्रथमा विभक्त्यर्थेऽव्ययमिष्यते' इत्यन्यपदार्थे प्रथमान्तत्वाभावे एव बहुव्रीहिरित्युक्तम्; तदपि व्याससमासयोर्भिन्नार्थत्वापत्तेर्युक्त्यभावादयुक्तम्। बहुव्रीहावन्यपदार्थे लक्षणेति केचित्। समासस्य तत्र शक्तिरिति **अरुणाधिकरणे वार्तिके**—

अतश्च दण्डिशब्देन सम्बन्ध्येवोच्यते यथा।
तथैव यौगिकैश्शब्दैः पिङ्गाक्ष्यादिपदैरपीति।

ततश्च योगरूढिः पङ्कजादिवत्। अन्यथा योगार्थप्रतीतेस्तत्रापि लक्षणा स्यात्। अथ तत्र शक्तिः सा तुल्या बहुव्रीहावपि, 'अनेकमन्यपदार्थे' इति स्मृतेर्लक्षणापरत्वे दीर्घगङ्गायां घोष इत्यत्रापि लक्षणया तीरपरयोर्दीर्घगङ्गापदयोः बहुब्रीहिः कप्रत्ययश्च स्यात्। एतेन पदद्वये लक्षणा परास्ता। नाप्यन्त्ये, पदान्तरा(न्व) यं विना लक्षणाभावात्। किञ्च पदद्वयेऽन्यपदार्थो न लक्ष्यः, शक्यसम्बन्धस्यान्यत्रापि सत्त्वात्। समुदितयोस्तत्रैव नियम इति चेत्-न, समुदितयोश्शक्त्याभावात्। एतेन प्रत्येकशक्त्या समुदाये लक्षणा परास्ता। तदुक्तम्—

'सर्वत्र यौगिकैश्शब्दैर्द्रव्यमेवाभिधीयते।
न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात्'।

इनि। सम्बन्धसामान्यं वाच्यं तद्विशेषो वा? नाद्यः, अननुष्ठेयत्वात्सर्वयौगिकानामेकार्थत्वापत्तेश्च। नान्त्यः; सम्बन्धिनं विना विशेषायोगात् तस्यापि वाच्यत्वापत्तेरित्यर्थः। सम्बन्धिनैव सम्बन्धः प्रत्येतुं यदि शक्यते पुनस्तस्याभिधाशक्ति कः श्रुतेः परिकल्पयेत्? गोमानित्यत्र 'तदस्य' इति सूत्रे सर्वनाम्ना पदान्तरसन्निहितद्रव्यविशेषोक्तेः यावत्सम्बन्धिविशेषेण सम्बन्धविशेषसिद्धिराक्षेपः, न तु सम्बन्धेन सम्बन्धिविशेषसिद्धिः, तस्यानेकसम्बन्धिष्वतिप्रसक्तेरित्यर्थः। सम्बन्धेन सम्बन्ध्याक्षेपस्तु देशचैत्राद्यनेकसम्बन्धिव्यभिचारात् सूत्रार्था-

ज्ञानाच्चोपेक्ष्यः। एतेन सम्बन्धिनौ विना गोसम्बन्ध इति शाब्दधीर्न स्यात् इत्यपास्तम्। तौ विना विशेषासिद्धेः। यत्तु चैत्रस्य गोमत्त्वम् इत्यत्र घटत्ववत् भावप्रत्ययस्य प्रकृत्यर्थसम्बन्धवाचकत्वान्मतुपः सम्बन्धो वाच्यः। अन्यथा घटत्वमित्यत्रापि त्वप्रत्ययस्य प्रकृत्यर्थजातिवाचित्वं न स्यात् इति। तन्न; गोमानित्यत्र तदस्येति सर्वनाम्ना तदस्येतिपदाभ्यां सम्बन्धिद्वयोक्तौ सम्बन्धिद्वयनिष्ठो धर्मः सम्बन्ध एव परिशेषाद्वाच्यः। न च सर्वत्र भावप्रत्ययस्य प्रकृत्यर्थवाचित्वं नियतम्, घटत्वत्वाभावत्वादौ प्रकृत्यर्थवाचकत्वाभावात्।

न हि गोभिरसम्बद्धो गोमानित्यभिधीयते।
विशेषणं विना नेष्टो विशेष्य (विशिष्ट) प्रत्ययोद्भवः॥
'विशेषणं च गावोऽत्र न सम्बन्धः कथञ्चन।'

सम्बन्धस्य विशेषणत्वे सम्बन्धान्तरापत्तेः। एतेन गोसम्बन्धीति सम्बन्धस्य प्रकारत्वं परास्तम्।

विभक्तवाच्यरूपेण सम्बन्धो नावगम्यते।
रूपान्तरेण वक्तव्य इति नास्ति च लक्षणम्।

तदस्यास्त्यस्मिन्निति हि तल्लक्षणे अस्येति द्रव्यमेवानूद्योच्यते, प्रकृत्या गावः। सम्बन्धस्य तु नान्यद्वाचकमस्तीति।

प्राक्प्रतीतैकसम्बन्धि विशिष्टेऽभिहिते परे।
सम्बन्धिनैव सम्बन्धः प्रतीत इति नोच्यते॥
आनन्त्येऽपि हि भावानां एकं कृत्वोपलक्षणम्।
शब्दस्सुकरसम्बन्धो न च व्यभिचरिष्यति॥ इति॥

यत्तु इन्द्रपीताधिकरणे पार्थसारथिः—

तत्र तत्पुरुषे स्वार्थलाभस्स्यादुत्तरे पदे।
बहुव्रीहौ द्वयोरन्यपरत्वाद्दुर्बलत्वधीः॥ इति॥

यच्च तत्रैव राणके—अन्यपदार्थप्रधानबहुव्रीहितः स्वपदार्थप्रधानतत्पुरुषस्य बलीयस्त्वादिति, तत् पूर्वपक्षमात्रम्। अत एव तत्र सिद्धान्ते हुताहुतसमुदायस्य सोमस्येन्द्राय दत्तस्य पानदशायामभावात्तत्पुरुषे लक्षणापत्तेर्बहुव्रीहिणा सवनवाचित्वम्। न च निषादस्थपतिमित्यत्र बहुव्रीहिणा विदुषो विप्रादेः श्रुत्या ग्रहणान्न कर्मधारयेणाविदुषः शूद्रस्याधिकारस्स्यादिति वाच्यम्। बहुव्रीहौ षष्ठ्यर्थे सम्बन्धे लक्षणासत्त्वात्कर्मधारये च तदभावात्। तत्त्वन्तु दण्डी गोमान् इत्यादौ समासाभावात् तद्धितस्य बहुव्रीह्यर्थत्वेऽप्यनन्यार्थत्वाद् अन्यपदार्थे शक्तिरेव। एवं पङ्कजेऽपि शक्तिः, कृतोऽनन्यार्थत्वात्। वार्तिकमपि तद्धितपरमेव। प्रत्ययस्य भिन्नसुबन्तत्वाभावादपदत्वादन्यपदार्थत्वम्। इन्द्रपीतनिषादस्थपत्यादौ त्ववयवविभक्तशब्दार्थत्वाभावात्। समासस्य च पदद्वयनिमित्तत्वाभावात्तत्पुरुषेऽपि षष्ठ्यर्थसम्बन्धतद्विशिष्टवाच्यत्वापत्तेश्च। दुर्बलत्वायोगात् जातपुत्रकृष्णकेशा-

दिवत्[1] पदद्वयेऽन्यपदार्थे एका लक्षणेति। न चेन्द्रपीते बहुव्रीहिणा कथं सवनवाचित्वम्? लक्षणापत्तेरिति वाच्यम्। 'प्रातस्सवनस्य गायत्रच्छन्दस इन्द्रपीतस्य' इति मन्त्रे सवनविशेषणत्वेन तद्वाचित्वात्। सोमस्य भक्षणे कर्मत्वेनेन्द्रपीतस्येति षष्ठ्ययोगाच्च। अन्यपदार्थो हि प्रधानं न तु वाच्यः। न हि राजपुरुष इत्यत्र पुरुषप्राधान्येऽपि समासस्य सोऽर्थः, पुरुषपदेन तदुक्तेः। किन्तु राजसम्बन्धविशिष्टे सम्बन्धे च लक्षणा षष्ठ्या लोपात्। एवं चित्रगुरिति षष्ठ्याद्यश्रुतेर्लक्षणा। न च सम्बन्धिभ्यां प्रतीतेर्न सम्बन्धे लक्षणा, सम्बन्धिनः पुरुषस्याश्रवणात्, राजपुरुषे तुल्यत्वाच्च। अन्यथा श्रुतसमासपदार्थत्वादन्यपदार्थत्वं न स्यात्। अन्यपदार्थे प्रधाने सत्यनेकं सुबन्तं समस्यत इति सूत्रार्थः। तदुक्तम्—'द्वयोरन्यपरत्वात्' इति। स्वार्थलाभाभावादित्यर्थः। तत्पुरुषवत् षष्ठ्याः पुंसश्चाश्रुतत्वाच्च। अन्यथा तत्रापि षष्ठ्यर्थे शक्तेर्दुर्बलत्वं न स्यात्। अतः स्वार्थसम्बन्धस्यैव लाघवेन लक्षणात्वात्पदद्वयेऽप्येका लक्षणेत्यन्ये। वार्तिके तु शक्तिरेवोक्ता। लक्ष्यत्वे हि चित्रवस्त्रो मैत्रः चित्रवस्त्रा स्त्री इत्यत्र वाच्यलिङ्गता न स्यात्। गङ्गायामितिवत्। न चैवं बहुव्रीहौ। यथा वा अधिहरीत्यव्ययीभावे विभक्त्यर्थःसमासार्थः तथाऽन्यपदार्थः। न च षष्ठ्यर्थे तत्पुरुषः श्रुतो येन वाच्यता स्यात्। अतः शक्तिरेवेति प्रतिभाति।

इति कमलाकरभट्टकृतौ समासवादः

## कारकवादः

अथ कारकम्। तच्च षोढा।

कर्म कर्ता च करणं सम्प्रदानं तथैव च।
अपादानाधिकरणमित्याहुः कारकाणि षट्॥

तत्र 'कारके' इत्यनुवृत्तौ 'अनभिहिते' इत्यधिकारः। तिङ्कृता चानभिहिते कर्मणि द्वितीया। यथौदनं पचति घटं करोति इति। ईप्सितमनीप्सितञ्च कर्म। उभयानुगतं साध्यत्वं द्वितीयार्थः। आद्यं चतुर्धा—उत्पाद्यं प्राप्यं विकार्यं संस्कार्यञ्च। यथा दोहस्य पयः, क्रयस्य सोमः, अवघातस्य व्रीहयः संमार्गस्य स्रुवश्च। अन्त्यं विषं भुङ्क्ष्वेति। तिङ्कृता वाऽभिहिते कर्मणि तु प्रातिपदिकमात्रे प्रथमा। यथा हरिः सेव्यते, सेवित इति वा, ओदनः पक्तव्य इति। गां पयो दोग्धि, अजां ग्रामं नयति, इत्यादौ क्रियायाः कर्मद्वयेऽप्यनुशासनात् द्विकर्मतापि। न तु द्विकर्मतानियमः। कुशशयने विशो निनाय, दुदोह गामित्यादौ गामानयेत्यादौ चाभावात्।

एवं तिङानभिहितसङ्ख्ये कर्तरि कृतानभिहिते च कर्तरि करणे च तृतीया। यथा लक्ष्म्या हरिः सेव्यते, मैत्रेण पच्यत इति। अभिहितसङ्ख्ये प्रथमा। मैत्रः पचतीति। कृताऽनभिहिते कर्तरि मैत्रेण घटः कर्तव्य इति तृतीया। तिङान-

---

१. प्राप्ताधानोद्देशेन 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्र जातपुत्रत्वकृष्णकेशत्वयोर्विधाने वाक्यभेदापत्तेः पदद्वयेनावस्थाविशेषो लक्ष्यत इति स्वीकृतं तद्वदित्यर्थः।

भिहिते दण्डेन करोतीति तृतीया। कृताऽनभिहिते करणे काष्ठैः पक्तव्य इति। अभिहिते प्रथमा। यथा कर्ता हर्ता राजेति कर्तरि। दण्डः करणं साधनमिति वा करणे। समासे कर्तरि करणे च प्रथमा। यथा कृतविश्वो हरिः। धनेन कुलमिति हेतौ तृतीया। तिङान्वये करणत्वम्, सुपान्वये हेतुत्वम्। अक्ष्णा काणः काणरूपः अक्ष्णा विकारवान् पादेन खञ्जः मुखेन त्रिलोचन इति 'येनाङ्गविकार' इति सूत्रात् विकारोऽर्थः। काणरूपाक्षिविकारवान् खञ्जरूपपादविकारवान्, त्रिलोचनत्वरूपमुखविकारवान् इत्यर्थः। अङ्गस्य हानिराधिक्यं वा विकारः। धान्येन धनी गोत्रेण गार्ग्यः प्रकृत्या चारुः इत्यभेदार्था तृतीया। 'प्रकृत्यादिभ्यश्च' इति सूत्रादिति भवानन्दः। तन्न; स्वभावकृता चारुता नान्यकृतेति हेतुत्वोपपत्तेः। उपलक्षणे वा। एवं 'जटाभिस्तापस' इति।

तिङा कृता वानभिहिते सम्प्रदाने चतुर्थी। विप्राय गां ददाति। मैत्रावरुणाय दण्डं प्रयच्छतीति। दानस्य कर्मणा गवादिना प्रीयमाणो विप्रादिः। दानपदं धात्वर्थमात्रपरम्। तेन मनुः पुत्रेभ्यो दायं व्यभजत्' इति साधु। यद्वा पुत्रेभ्य इति पञ्चमी। कृताभिहिते प्रथमा। दानीयो विप्र इति।

समासेन कृता वानभिहितेऽपादाने पञ्चमी। विभागावधिरपादानम्। यथा गामादाच्छेति। वृक्षात्पततीति। अभिहिते तु प्रथमा। यथा 'निकृष्टविश्व' इति। समासे भवत्यस्मादिति भव इति कृति।

समासेन कृता वानभिहितेऽधिकरणे सप्तमी। आधारोऽधिकरणम्। यथा कटे आस्ते शेते वेति। समासोक्ते प्रथमा। यथा बहुधनं गृहमिति। कृतोक्ते ग्रामोऽवस्थानमिति। करणसम्प्रदानाधिकरणानां तिङाभिधानमेव नास्ति अतस्तत्र कृता समासेन वाऽनभिहित इति ज्ञेयम्।

प्रथमायान्तु चैत्रः पचति घटो भवति इति तिङाभिहितकर्तृसङ्ख्याश्रयत्वाच्चैत्रादेः कर्तृत्वम्। क्रियाश्रयत्वे लक्षणेति शिरोमणिः। तिङा सुपा चोक्तमेकत्वं चैत्रगतमेव न तु प्रथमायाः कर्तृत्वमर्थः। प्रातिपदिकार्थमात्रे तदुक्तेः। अतोऽत्र सुप्तिङोरेकविभक्तित्वाभावेऽपि विरुद्धविभक्तिराहित्ये सति कर्तृसङ्ख्यारूपैकार्थपरत्वात्सामानाधिकरण्यम्। तेन लक्षणया कर्तुर्बोधः। एतद्वार्तिके भावार्थपादे स्पष्टम्। केवलाख्याते तु सामानाधिकरण्याभावान्न लक्षणा। नन्वेवं 'स्वर्गकामो यजेत' इति कर्तृसङ्ख्याश्रयत्वादुक्तसामानाधिकरण्याच्च लक्षणया पुंस एव कर्तृत्वापत्तिरिति चेत्—न; गुणभूतो विधेयश्च कर्ता, स्वर्गकामस्तु उद्देश्यः, कथं कर्ता स्यात्। अतो न तत्र कर्तृगतमेकत्वम्। पुंसस्तु विशेष्यस्य सिद्धत्वात् साध्यत्वे बाधाद्विशेषणस्य स्वर्गस्य तत्त्वम्। साध्यस्य कर्मापेक्षिण्यां भावनायां लक्षणया कर्मिपदोक्तस्य कर्मत्वम्। नाकर्त्तुः फलसङ्गतिरिति न्यायाच्चार्थात् कर्तृत्वं न शाब्दम्। अत एवोद्देश्यगतत्वादेकत्वपुंस्त्वाविवक्षया स्त्रिया अप्यधिकार उक्तः षष्ठे। चैत्रः पचतीति तु चैत्रस्यासाध्यत्वान्नोद्देश्यत्वम्, किन्तु कर्तृत्वमेव। अतो न कामपदे कर्तृगतमेकत्वं किन्तु प्रातिपदिकार्थमात्रे प्रथमैकवचनम। पचतोत्यत्र तु सामानाधिकरण्याभावान्न लक्षणेति मदीयः पन्थाः सुधीभिर्दूरं विभाव-

नीयः। तेन प्रातिपदिकार्थमात्रविवक्षायां प्रथमा। तत्सम्बन्धविवक्षायान्तु षष्ठी। क्वचित्तु 'कर्तृकर्मणोः कृती' त्यादौ कर्तृत्वाद्यपि षष्ठ्यर्थः। यथा वज्रस्य भर्ता इति वज्रे कर्मणि षष्ठी। नन्वत्राख्याताभावेन क्रियाभावात्तां विना कथं कर्मादिकारकान्वयः। मैवम्; तद्धि धात्वर्थकर्म, न भावनायाः। कृता च धात्वर्थकर्मोच्यते न भावनायाः। 'कृदभिहितो भावो द्रव्यवद् भवती' त्युक्तेः। तार्किकास्तु चैत्र ओदनं पचतीत्यत्रोदनानुकूलकृतिमानित्यर्थमाहुः। ते पाकस्योदने साधनत्वात् कृतौ साध्यत्वात्साध्यसाधनभावद्वयस्य कृतित्रयस्य च बोधाभावात् प्रथमान्तेऽस्तीत्यध्याहारापत्तेश्चोपेक्ष्याः।

केचित्तु ओदनविषयपाकानुकूलकृतिमानित्यर्थमाहुः, तदतिमन्दम्। सिद्धो हि विषयो भवति, यथा ज्ञानस्य घटः। ओदनस्त्वसिद्धः कथं पाकस्य विक्लृत्तेर्विषयः। अतस्साध्य एव सः। न चैककृतौ पाकौदनयोस्साध्यत्वम्। यत्तु पक्षधरमिश्रेणोक्तम् सुब्विभक्तौ न लक्षणा, अनुशासनान्तरवैयर्थ्यात् इति तन्न; अनुशिष्टानां वाच्यत्वेऽपि अन्यत्र लक्षणायां बाधकाभावात्। न हि कटमध्यास्ते इत्याधारत्वं द्वितीयार्थः। अन्यायश्चानेकार्थत्वमिति न्यायात्। न लक्षणा, तस्याः पुरुषाधीनत्वेन 'अधिशीङ्स्थासां कर्म' इति शास्त्रवैयर्थ्यात्। 'सक्तूनग्निहोत्रम्' 'पशुमालभेत' 'प्रयाजशेषेण' इत्यादौ [सुब्विभक्तौ] लक्षणादर्शनाच्च वेदविप्लावका इत्युपेक्ष्याः।

इति कमलाकरभट्टकृतौ विभक्त्यर्थकारकवादः

## आख्यातार्थविचारः

विवादो यत्र विदुषां प्रमादो महतामपि।
आख्यातार्थः प्रोच्यतेऽसौ कमलाकरशर्मणा॥

तत्राख्यातं नाम तिङ्प्रत्ययः, न तु लकारः, नापि तदादेशमात्रम्, केवललकारे तदादेशे शतृशानजादौ च भावनाप्रतीत्यभावात्। यद्यपि पचन् इति शत्रादौ गुणभूतो धात्वर्थः तद्भिन्ना वा भावना स्यात्तथापि न तत्प्राधान्यम्, द्रव्यप्राधान्यात्कारकलिङ्गसङ्ख्यादियोगाच्च। तदाह यास्कः—'भावप्रधानमाख्यातम्' इति। भावो भावना, न तु शुद्धधात्वर्थः, तस्य धातुवाच्यत्वेनाख्यातप्रत्ययार्थत्वाभावात्। अतएव का क्रियेति कृदन्ते क्रियाप्राधान्येऽपि न भावनात्वम्, सिद्धप्रतीतेर्भावनाशब्दवत्। तत्र सर्वाख्यातार्थः कृतिरेव। सैवार्थभावना।

'सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते॥'

(तं. वा. पृ. ३७६ पू. सं)

इति वार्तिकात्। 'तिङ्वाच्यो हि करोत्यर्थः सामानाधिकरण्यत' इति राणकाच्च। यद्यपि प्रयोजकव्यापाररूपा भावना करोतिभावयत्योरेव मुख्या वाच्या, सिद्धकर्तृकत्वान्न तु लडादौ घटो भवतीत्यादावसिद्धकर्तृके, तथापि तत्र

प्रयोज्यघटादिव्यापारेण प्रयोजकव्यापाराक्षेपाद्गौणी भावनेति भट्टाचार्याः। लिङ्लोट्लेटान्तु कृतिवाचित्वेऽपि विशेषरूपेण प्रेरणाद्यर्थः। सा च प्रवर्तकव्यापारः। तद्व्यस्य प्रैषवाचित्वेऽप्यप्राप्तप्रैषे फलतः प्रेरणार्थत्वम्। सैव शाब्दी भावना। सर्वं चाग्रे व्यक्तीकरिष्यते। लडादौ वर्तमानादिकालो द्योत्य एवेत्येके। वाच्य इत्यपरे। अत्राहुः प्राञ्चः—आख्यातस्य कृतिर्वाच्या; न तु कर्ता। कृत्याश्रयस्य कर्तृत्वान्नागृहीतविशेषणान्यायेन कृतेर्वाच्यत्वात् कर्तुराक्षेपेण लाभात् प्रथमान्तपदेन बोधाच्च। चैत्रः पचतीति हि पाककर्ता चैत्रो विशेष्यः, कृतिर्विशेषणम्, आश्रयत्वं संसर्गमर्यादया लभ्यम्। तत्र स्थानी लकार एव वाचको न त्वादेशस्तिबादिः अननुगमाद्गौरवाच्चेति। तन्न; पचन्तं पचमानं वा चैत्रं पश्येति शतृशानजादौ लत्वात्कृतिवाचित्वापत्तेः। न चेष्टापत्तिः। नामार्थयोरभेदस्य संसर्गत्वात् कर्तृपरत्वावश्यकत्वात्। न च पचतिरूपं पचतिकल्पं चैत्र इत्यभेदात्तिङोऽपि कर्तृवाचित्वम्, तत्र तिङ्सत्वेऽपि तदन्तत्वाभावेन नामत्वात्। तेन लादेशानां तिङां कृतौ तिप्त्वादीनाञ्च कर्तृसङ्ख्यायां शक्तिः। शत्रादीनान्तु कर्तर्येव। तत्र सङ्ख्याशास्त्राभावादिति भाट्टाः नव्यतार्किकाश्च। एतेन लकारस्यैकत्वाच्छत्रादौ कर्त्रर्थत्वं तिङादौ च कृतिवाचितेत्यनेकार्यत्वमन्याय्यम्, आदेशविशेषणवाचित्वे वा पदस्फोटाद्यापत्तिरिति दूषणं परास्तम्। शानजादौ सङ्ख्यासत्त्वासत्त्वाभ्यां व्यवस्थानात्। अत्र वैयाकरणाः—'कर्तरि कृत्' इत्यतः कर्तरिग्रहणं 'लः कर्मणि च' इत्यत्रानुवर्तते। तत्र लकाराणां कृतौ ण्वुलादीनाञ्च कर्तरि इति कुतः शक्तौ वैलक्षण्यम्? पचन्तीत्यतः क्रियावत् कर्तुरपि प्रतीतेः, कः पचति? चैत्र इति प्रश्नोत्तरवशात् कर्ता वाच्य एव।

किञ्च 'युष्मदादिसमानाधिकरणे मध्यमः' 'अभिहिते कर्तरि प्रथमा' इत्यादिकर्तृसामानाधिकरण्यादिकं कर्तृवाचित्वे मानम्। न चानभिहिते इत्यत्रानभिहितसङ्ख्ये कर्तरीत्यर्थः। कृतद्धितसमासेषु सङ्ख्यावाचित्वाप्रसिद्धेरित्याहुः। तन्न; न तिङः कर्ता वाच्यः, कृतां कारकान्वयात् तिङाञ्च तदन्वयात् सिद्धासिद्धप्रतीतेः कर्तुरपि कारकत्वेन तिङान्वयात्तिङा सङ्ख्यावाचित्वस्मृतेः शतृशानजादौ तदभावाच्च मध्यमोत्तमपुरुषादौ युष्मदस्मदर्थगतसङ्ख्यामात्राभिधानाच्च।

किञ्च त्वं पचसि, देवदत्तः पचति, इत्यादौ श्रुत्या कारकार्थत्वात् कर्तृवाचित्वम्? लक्षणया वा? नाद्यः; असिद्धेः। मम हि क्रिया वाच्या तव तु कर्तृत्वं सामान्यम्। न च सामान्यविशेषयोरेकार्थत्वम्। वृक्षः शिंशपा इत्यादावभावात्। तथात्वे सहप्रयोगायोगात्। नान्त्यः; न हि सिंहो देवदत्त इति लक्षणया सामानाधिकरण्ये वाच्यता भवति। अथ तिङः पाचकादिवत् कर्तृविशेषार्थत्वम्। ततः सत्त्वप्राधान्यात्तद्वदेव लिङ्गसङ्ख्याकारकयोगो नामत्वापत्तिश्च दुर्वारा। तदुक्तम्—

'यदि च द्रव्यवाचित्वं सुप्तिङन्तेष्वपीष्यते ।
ततो लिङ्गादियोगस्स्यात्सत्त्वं भावात्कृदन्तवत् ॥' इति ।

तेन सुपां कर्माद्यर्थत्वं न तु तदाश्रयद्रव्याद्यर्थत्वमित्यर्थः । ननु 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वाभावेन सुपोऽभावान्न नामत्वापत्तिरिति चेन्न; तिङो यदि कर्तृवाचित्वं स्यात्ततः सत्त्वप्राधान्येऽपि नामत्वाभावाद्विरुद्धञ्च वदन् यास्को भ्रान्त एव स्यात् । तिङि सत्त्वप्राधान्यस्य लक्षणस्यातिव्याप्तेः । तेन तद्विरुद्धं कर्तृवचित्वं वदन् त्वमेव भ्रान्तः । पचतीत्यतः कर्तुः विशेषाप्रतीतेश्च । तेन चैत्रः पचतीति सामानाधिकरण्यात् कर्तृवाचित्वं परास्तम् । 'अनभिहिते' इति सामान्यस्य तिङाऽनभिहितसङ्ख्ये इत्यर्थः । कृत्यनभिहिते कर्तरि कर्मणि चेति यथायोग्यमन्वयः । तद्धितसमासयोः कर्त्रभिधानस्य तवाप्यप्रसिद्धेः । न च कृतपूर्वीकटमिति तद्धिते 'कृतविश्व' इति समासे कर्त्रर्थत्वम् । तत्रानुशासनाभावात् कृत इति कर्मणि प्रत्ययेन तृतीयान्तकर्तुर्बाधाच्च । अन्यपदार्थे हि शक्तिर्न तु कर्तरि । स कर्ता कर्म वाऽस्तु न तु तत्त्वेन शक्यता । यत्तु धातूपात्तव्यापाराश्रयः कर्तेति तदप्ययुक्तम्—न हि धातोर्व्यापारोऽर्थः, तथात्वे 'ज्योतिष्टोमेन' इति तृतीयान्तनामाभेदायोगात् । न च धात्वर्थसामान्यं धातोर्वाच्यम्, कृदन्तेऽपि सत्त्वात् । तत्र च 'कृदभिहितो भावो द्रव्यवद्भवति' इत्युक्तेर्व्यापारार्थत्वाभावात् तिङ्युक्तधातुवाच्यत्वे 'तदागमे हि' इति न्यायेन तिङ्वाच्यत्वात् । तदुक्तं वार्तिके—

'तेन क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः ।
प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यते' ॥ इति ।
(तं. वा. २. १. १)

तेन कर्तृसङ्ख्यैव तिङोऽर्थः न तु कर्ता । स हि क्रियासङ्ख्ययोः प्रधानम् अङ्गं समप्रधानं वा ? नाद्यः; स्वरूपहानात् । तेन क्रियाक्षेपापत्तेश्च । न द्वितीयः; सङ्ख्याक्रिययोः कर्त्रर्थत्वात्प्राधान्ये तयोर्वैरूप्यापत्तेः । नान्त्यः; अन्योन्यमनन्वयापत्तेः । क्रियाप्राधान्ये तु आक्षेपात्सिद्धेर्न वाच्यता । एतच्च वार्तिके कर्त्रधिकरणे स्पष्टम् ।

यत्तु कर्तुराख्यातार्थत्वाभावे शानचोऽपि लादेशत्वात्कर्तृवाचित्वं न स्यात् । ततश्च जञ्जभ्यमानाधिकरणे उक्तम्—'कर्तुःशानजर्थत्वं न स्यादिति कश्चिदाह । तत्तुच्छम्; आख्याते हि प्राधान्येन क्रियाप्रतीतेस्तया कर्तुराक्षेपात्प्रतीतिसिद्धेर्न वाच्यत्वम्, अनन्यलभ्यो हि शब्दार्थः । अत एव कर्मप्रत्यये कृत्सु च भावनया कर्त्राक्षेपः परास्तः । कर्मप्राधान्येन भावनाप्राधान्याभावात् । देवदत्तेनोदनः पच्यते पक्तव्य इत्यत्राभिहितसङ्ख्यत्वेन तृतीयाश्रुत्या कृति च कर्तुः शाब्दस्याक्षेपायोगात् । न च शानचि गुणभूतः कर्ता, किन्तु प्रधानभूतः । अतः कथं तस्याक्षेपः ? न च प्राधान्येऽपि जात्या व्यक्तेरिव शानच्यपि कर्तुरपि प्रधानस्याक्षेपः । 'भावप्रधानमाख्यातम्' इति स्मृत्या कर्तरीति सप्तम्या चाधारस्य प्राधा-

न्यासिद्धेः । सिद्धौ वा कर्तृगतसङ्ख्या न स्यात् नामत्वञ्च स्यादिति महत्पाण्डित्यम् । पचति व्रीहिभिरित्यादौ शाब्दान्वयसम्भवादाक्षेपः, चैत्रः पचति व्रीहीन् इत्यादौ चान्वयायोगादनुपपत्त्या लक्षणैवेति रहस्यम् । न च कृति शानजादौ द्रव्यप्राधान्ये क्रियाप्राधान्यप्रतीतिः, येन तयाऽऽक्षेपः स्यात् । तथात्वे कारकान्वयापत्तेः । न चेष्टापत्तिः । तथात्वे काष्ठैः पचमानोऽस्ति इति क्रियापदाध्याहारो न स्यात् । यद्यपि काष्ठानां गुणभूते पाकेऽन्वयः न ह्यसत्तायां तथापि न कर्त्रा पाकान्वयेन निराकाङ्क्षः । किन्तु सत्त्वान्वयेनैव । कर्तृकारकान्वयार्थो हि तस्याध्याहारः । न हि तस्यान्यत्कृत्यमस्ति विना प्राधान्येन क्रियाप्रतीतिम् ।

किञ्च पाकस्य साध्यत्वाश्रुतेर्न काष्ठानां तत्राशाब्दे साध्येऽन्वयः । न हि क्रियैव कर्म किन्तु तदवच्छेदकम् । अत एव काष्ठैः पाकं कुर्वाण इति तत्साध्यकभावनोल्लेखः । अतः पाकसाध्यत्वस्य कृतेश्चाश्रवणादसाधुत्वम् । एवञ्च वज्रस्य भर्तेति वज्रकर्मकभरणकर्तुः सत्ताकाङ्क्षा, न कर्मान्वयः । न च वर्तमानकालार्थोऽध्याहारः, लटैव तल्लाभात् । न वा कृदन्ते करोतिसामानाधिकरण्यम्, येन क्रियाप्राधान्यं स्यात् । तदुक्तम्—'भावप्रधानमाख्यातम्' इति । वार्तिकेऽप्युक्तम्—

सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति ।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥ इति ।

(तं. वा. २. १. १)

व्यासोऽपि 'विभज्य सेनां परमार्थकर्मा
सेनापतींश्चापि पुरन्दराख्यः ।
नियोजयामास स शत्रुसैन्ये
करोतिरर्थेष्विव सर्वधातून् ॥ इति ।

सर्वधातुव्याख्यानं करोतिप्रत्ययादित्यर्थः । यद्यपि वार्तिके कृदन्तेऽपि गुणभूतभावनाधीरुक्ता, यदि वा धात्वर्थ एव भावनेति पक्षः, तथापि न सा कारकान्वया (द्वा ?) द्रव्यं प्रतिगुणत्वात् 'पदार्थः पदार्थे नान्वेति न तदेकदेशेने'ति न्यायात् । तत्र विशेष्ये बाधाद्विशेषणान्वयः । अध्याहारेण वा तल्लाभः । अन्यथा तदुच्छेदापत्तेः । ननु कृदन्ते कारकायोगे कथं कर्तृकर्मणोः कृति इत्यादिशास्त्रमिति चेत्-प्रधानक्रियाकारकोक्तिर्धात्वर्थेन गुणभूतभावनया वाऽन्वयो गौणः अध्याहारात् । यद्वा कृत्स्नयोगवति वाक्ये इत्यर्थात्तेनाख्याते प्रधानभूतक्रिययाक्षेपात्प्रतीतेर्न कर्तृवाचित्वं किन्तु तद्गतसङ्ख्यावाचित्वमेव । न च शानजादौ क्रियाप्राधान्यं न वा सङ्ख्यावाचित्वम् । अतोऽनन्यार्थत्वात्कर्तृवाचितैव । न च कर्त्रैव क्रियाक्षेपः शङ्क्यः । क्रियाश्रयत्वं विना कर्तृत्वाभावान्नागृहीतविशेषणान्यायात् कृद्वल्लिङ्गसङ्ख्याकारकयोगापत्तेश्च । न च कृत्सु लिङ्गसङ्ख्याद्यैराख्यातवत्कर्ता ज्ञेयः । तद्वत्सङ्ख्याशास्त्राभावे कर्तरि कृदित्यस्यैव शक्तिग्राहकत्वात् । यत्तु कश्चिदाह—भावनया कर्तुराक्षेपे लक्षणायां वा पिङ्गाक्षी गोमानिति यौगिकेष्वपि द्रव्याक्षेपात् सम्बन्ध एव वाच्यस्स्यादित्यरुणाधिकरणकर्त्रधिकरणाद्युच्छेदः, 'अरुणया पिङ्गाक्ष्या'

'वैश्वदेव्यामिक्षा' 'गोमान्' इत्यादौ सम्बन्धवाचित्वेन द्रव्याक्षेपापत्तेरिति। तदज्ञानकृतम्। राज्ञः पुरुष इति षष्ठ्यन्तस्य गुणत्वात् सम्बन्धप्राधान्याभावात्तदस्येति सर्वनाम्ना द्रव्योक्तेः। अत एव गोमान् गोमती भुरिति तल्लिङ्गत्वं न तु सम्बन्धलिङ्गत्वम्। किञ्च सम्बन्धसामान्यं वाच्यं? विशेषो वा? नाद्यः; (करण) विशेषाबोधात् सामान्योक्तौ सर्वयौगिकानां पर्यायतापत्तेः। नान्त्यः; सम्बन्धिविशेषं विना तद्विशेषायोगात्।

यत्तु–गोमत्वमिति भावप्रत्ययेन सम्बन्धोक्तेः मतुप्प्रत्ययस्य घटत्ववत्प्रकृत्यर्थवाचकत्वमिति, तदभावत्वघटत्वत्वादावभावादयुक्तम्। मतुपि तु प्रत्ययस्य सर्वनाम्नोक्तद्रव्यनिष्ठान्यगुणाभावाच्च सम्बन्धार्थत्वम्। तदुक्तम्–कृत्तद्धितसमासेषु भावप्रत्ययेन सम्बन्धाभिधानमिति। स्वार्थसमवेतगुणस्सर्वत्रास्तीति न सम्बन्धोऽर्थः। गोमानित्यत्र गोसम्बन्धीति सम्बन्धस्य प्रकारत्वन्तु सम्बन्धान्तरापत्तेरयुक्तमेव। का तर्हि 'लः कर्मणि च' इत्यनुकृष्टस्य कर्तरीत्यस्य गतिः? अत्राहुर्भट्टपादाः पार्थसारथ्यादयश्च-लः कर्मणीत्यस्य 'द्व्येकयोः' इत्यस्य चैकवाक्यत्वात् कर्तृगतैकत्वादौ लादेशैकवचनमिति। न हि कर्तरि द्व्येकयोः कर्त्रोरित्यन्वयः सम्भवति। द्व्येकयोरिति कर्तृपरत्वे द्व्येकेष्विति बहुत्वापत्तेश्च। तेन भावप्रधाननिर्देशात्कर्तरि द्वित्वैकत्वयोरित्यर्थः। तेन सिद्धं सङ्ख्यामात्रवाचित्वम्। किञ्चाख्यातस्य कर्तृवाचित्वे सत्त्वप्राधान्यान्नामत्वं स्यान्नाख्यातत्वम्, 'सत्त्वप्रधानानि नामानि' इति यास्कोक्तेः। न च कर्तुरवाच्यत्वे कथं तत्सङ्ख्यावाचित्वमिति वाच्यम्, यथा–क [पिश] शोणादावश्वमनभिधाय तद्गतरूपविशेषाः शक्यास्तथात्रापीत्यदोषः। यथा वा वत्सधेन्वादेः शिशुविशेषादयः। सा च सङ्ख्या तिप्त्वेन वाच्या, न तु लत्वेन तस्य सङ्ख्याशून्यत्वादतिप्रसङ्गाच्च। अत्र वैयाकरणम्मन्यः कश्चिदाह—तिबाद्यादेशनिष्ठा एकवचनद्विवचनबहुवचनादिसंज्ञा। तेन तिबादिविधेर्द्व्येकयोरित्यस्यैकवाक्यत्वेऽपि न तत्र कर्तरीत्यस्ति। येन कर्तरि द्व्येकयोरित्यर्थस्स्यात्। लविधेस्तिबादिविधेश्च वाक्यैकवाक्यत्वेऽपि लानुवादेनादेशविधानाल्लविधौ श्रुतं कर्तरीति न सङ्ख्याविशेषणम्। सङ्ख्याविधेः पश्चात्तनत्वेन पूर्वप्रवृत्तलविधौ सङ्ख्योपस्थित्यभावात् लकारे च स्वतः सङ्ख्याशून्यत्वादिति। तन्न; अयं हि शिखां धृत्वा प्रष्टव्यः—तिबादीनां कर्ता वाच्यो न वा? नाद्यः; सङ्ख्याविधौ कर्तरीत्यभावात् इति हि त्वयैवोक्तम्। न च तिबादीनां सङ्ख्यानुवेधं विना विधिरस्ति। अथ तदादेशन्यायेन तिबादावपि कर्तुरनुवृत्तिं ब्रूषे, तर्हि सा तदैव सङ्ख्याविशेषणमेवेति न कर्तुर्वाच्यतां नियन्तुमलम्। न च शतृशानजादौ तदापत्तिः, तत्र सङ्ख्याश्रवणाभावात्। न च तिबादौ कर्तुर्वाच्यत्वाभावे शत्रादावपि तदभावः, शत्रादौ सङ्ख्याभावे कर्तुरेव वाच्यत्वात्।

ननु शतृशानजादौ 'कर्तरि कृत्' इति न शक्तिग्राहकम्, स्थान्यर्थेनैव तल्लाभात्। किन्तु पाचक इत्यादौ स्थान्यभावे उक्तार्थण्वुलादिपरमेव। अन्यथा शानचः कर्तर्येव नियमे पित्रा शप्यमाने क्रियमाणे वा गत इति भावे कर्मणि च शानच्

दुर्लभस्स्यात् । तेन शानचि 'कर्तरि कृत्' इत्यस्याप्रवृत्तेः लादेशत्वादेव कर्तृवाचित्वम् । तच्च तिङोऽपीति कर्तृवाचित्वमिति चेत्–मैवम्; कर्तरि कर्मणि भावे च शानच आर्थत्वेऽपि तिबादौ 'लाविच्च'गतचकारोक्तकर्तृग्रहणस्य सङ्ख्याविशेषणत्वाक्षतेः । अन्यथा तिबादौ तवापि कर्तृधीर्न स्यात् । न च कर्तरीति सकृच्छ्रुतं क्वचित्सङ्ख्याविशेषणं क्वचिच्च शत्रादौ नेति कथमर्धजरतीयमिति वाच्यम् । सङ्ख्याश्रवणाश्रवणाभ्यां व्यवस्थानात् । पाणिनेरयमुपालम्भो नास्माकम् । ननु शानजाद्यर्थं कर्त्रादौ लकारस्य 'लः कर्मणि' इत्यत्र विधिः. द्वयेकयोरिति सङ्ख्यार्थमनुवादश्चेति विध्यनुवादवैरूप्यमिति चेत्—न; कर्त्रादौ लविधिरेवायम् । तत्र तु कर्तरि ग्रहणे लस्येति सूत्रेण तिङि तदादेशन्यायेन सङ्ख्याशास्त्रेऽनुवृत्ते सङ्ख्याविशेषणत्वं भवति । अन्यथा द्वयेकयोरित्यस्य भावप्राधान्येन कर्तृगतत्वायोगात् शाब्दसम्बन्ध्यपेक्षणात् तिङुक्तक्रियागतसङ्ख्याभावाच्च । अथ तिङः कर्ता न वाच्यः । तन्न; इष्टापत्तेस्तवापसिद्धान्ताच्च । सङ्ख्याविधौ कर्तुरनुवृत्त्यभावे हि वाच्यतैव न स्यादिति साधु समर्थितस्स्वसिद्धान्तः । न च सुप्स्वपि 'कर्तृकरणयोस्तृतीया' इत्यादेः सङ्ख्याविशेषणत्वात् कर्त्रादेरवाच्यत्वापत्तिः, सुपि क्रियाभावेन तदाक्षेपायोगे तयोरेव वाच्यत्वात् ।

किञ्च 'ङ्याप्प्रातिपदिकात्' इत्यनुवृत्त्या हि तत्र कर्तरि वर्तमानात्प्रातिपदिकात् तृतीया, न तु सङ्ख्याविशेषणम् । यद्यपि तदागमन्यायेन प्रत्ययार्थ एव करणत्वमन्वयव्यतिरेकाभ्याम्, तथापि प्रकृत्यर्थगतमेव तत् । न हि पशुनेत्यादौ कारकं विना द्रव्यसङ्ख्यादेः क्रियान्वयोऽस्ति । तेन द्वयोर्द्रव्यसङ्ख्ययोः कारकान्वयेऽरुणान्यायेन पार्ष्ठिकोऽन्वयःसम्बन्धः । यत्र तु कर्मादिकारकं न विधेयं तत्राविधेयविशेषणत्वान्न सङ्ख्यायाः द्रव्यान्वयः । यथा ग्रहमिति । अत एव प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वनियमः सुप्स्वेव न तिङ्क्षु । न हि यजतीति यागगतमेकत्वं किन्तु कर्तृगतम् । कारकगतसङ्ख्यायाः क्रियान्वयोऽनाशङ्क्य एव अकारकत्वात् । अत एव न कारकं प्रधानम् । आख्याते कर्तृसङ्ख्यायाः कथं क्रियान्वय इति चेत्–कर्तृद्वारेत्यवेहि । कथमशाब्देन कर्त्राऽन्वयः द्वारत्वं वा ? तस्येति चेत्–न कारकद्वारा क्रियान्वयः । तच्च कर्तृकारकं सद्भावमात्रेण द्वारम् । यथा यागस्यापूर्वम्, यथा वाऽभिक्रमणे कर्ता । तदुक्तम्—

'अनुपातोऽपि सद्भावमात्रेण द्वारतां व्रजेत् ।
कर्ताऽभिक्रमणं तेन भवेद्धोमस्य साधनम् ॥'

इति । यथा वारुण्यस्य द्रव्यम् । 'साम्ना स्तुवीत' इति साम्नामृगक्षराभिव्यक्तिद्वारम् । यथा वा 'व्रीहिभि' रित्यादौ जातेर्व्यक्तिद्वारम् । अन्वयप्रतियोगिपदार्थाकाङ्क्षा हि शाब्दीत्युच्यते । न चेयं तादृशी, येन शाब्दो स्यात् । न तु तत्र क्रियासम्बन्धे द्वारकल्पना । अत्रैकत्वस्याकारकस्य क्रियासम्बन्ध एव कथम् ? पशुनेत्येकत्वस्य कारकान्वयवदेकप्रत्ययश्रुत्या क्रियान्वय इत्यवेहि । तत्र द्रव्यद्वारेवात्र कर्तृद्वाराऽन्वयः । कर्तृगतसङ्ख्याविशेषे शक्त्या वा सामर्थ्यात्कर्तृद्वारा

क्रियान्वयः। तत्र करणत्ववत्कर्त्रन्वयः कल्प्यत इति केचित्। तन्न; कर्तृसम्बन्धायोगात्।

किञ्च त्वन्मते? कर्तृसङ्ख्यायाः सुब्वदवाच्यत्वादसम्बन्धः स्यात्। न चैकशब्दाभिधानात्सम्बन्धः, सुप्यपि करणगतैकत्वापत्तेः। न चैक क्रियान्वयेनारुण्यवत् पार्ष्ठिकोऽन्वयः, सङ्ख्यायाः कारकं विना क्रियान्वयस्यैवासिद्धेः। तथात्वे कर्तुर्वाच्यत्ववैयर्थ्यात् क्रियागतैकत्वापत्तेश्च। कर्तृगतैकत्वाभावे बहूनां कर्तृत्वापत्तेः। कथञ्च सकृदुक्तः कर्ता सङ्ख्याया विशेषणं प्रधानञ्च स्यात्? वैरूप्यापत्तेः। नापि सङ्ख्याविशिष्टः कर्ता कर्तृविशिष्टा वा सङ्ख्या वाच्या, नामत्वापत्तेः ननु कर्तृवत् कर्मणोऽप्यवाच्यत्वापत्तिरिति चेत् न; तस्य क्रियां प्रति प्राधान्येन तयाऽऽक्षेपाभावात्। अङ्गं ह्याक्षिप्यते न तु प्रधानमङ्गेन। अतः कर्मणोऽवाच्यत्वेऽपि कर्ता वाच्य इति केचित्। तन्न; वार्तिके क्रियाप्राधान्यात् कर्मणोऽप्यवाच्यत्वोक्तेः। अन्यथा सामान्यस्य विशेषस्य वाच्यत्वायोगादोदनाद्येकार्थत्वाभावान्नामत्वापत्तेश्चेत्युक्तमित्यलं मूर्खदूषणेन।

## आर्थी भावना

अथाख्यातवाच्या आर्थीभावनोच्यते। सा चास्माभिर्भावार्थपादे वार्तिकटीकायां सम्यगुक्ता। तत्रत्यैव तूच्यते। सा चोक्ता वार्तिके—

तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः।
प्रयोजकक्रियामाहुः भावनां भावनाविदः" ॥ (तं वा. २.१.१)

इति। तेन-करोतिभावयत्योस्तुल्यार्थत्वेन।

अत्रेदं तत्त्वम्—प्रयोज्यनिष्ठप्रयोजकव्यापारो भावना। निष्ठः तत्फलकः। ननु केयं प्रयोजकक्रिया भावना नाम। न कर्तृव्यापारः, स हि पचावधिश्रयणादिः। यजौ त्यागः, सङ्कल्पो वा। गतौ चलनम्। ते च तत्र धात्वर्था इति धात्वर्थस्य भावनात्वापत्तिः। न च स्वस्मिन् धात्वर्थस्य करणत्वम्, विरोधात् सिद्धत्वाच्च। नापि यत्नो भावना, रथो गच्छति कूलं पतति इत्यत्र व्यभिचारात्। न स्पन्दः, यजतोत्यात्मकर्तृकेऽभावात् नोभयानुगतौदासीन्यविच्छेदः[1], शाब्द भावनायामभावात्। तत्र स्पन्दयत्नयोरयोगात्। नान्योत्पादानुकूलत्वम्। तद्धि सर्वधात्वर्थेष्वेकमनेकं वा? नाद्यः, धात्वर्थभेदे भावनाभेदायोगात्, फलभेदायोगाच्च। नान्त्यः, अप्रतीतेः। न च फलभेदाद्भावना भेदः, धात्वर्थभेदात्फलभेदसिद्धेः। नाप्यसिद्धावस्य फलहेतुः पदार्थो भावना, धात्वर्थस्यैव तथात्वात्। न च फलानुकूलो धर्मो भावना। स हि धात्वर्थस्य धर्मः? पुंसो वा? नाद्यः, पुंधर्मत्वाभावे विधिविषयत्वायोगात्, सिद्धान्तविरोधाच्च। नान्त्यः; पुंधर्मे यत्ने यागजनके यागस्य करणत्वाभावात् यागस्य साध्यत्वे विधेः प्रवर्तकत्वभङ्गाद्यागस्य करणत्वेऽवैधे पाकादौ धात्वर्थस्य करणत्वाभावे फलानुकूलव्यापाराभावेन भावनाभावापत्तेश्चेति चेत्—

१. औदासीन्यविच्छेदः—उदसीनत्वस्य विच्छेदः अभावः, कुर्वद्रूपत्वम् सहकारिनिरपेक्ष-कार्यजनकत्वमिति यावत्।

अत्राहुः— धात्वर्थानां द्वे रूपे। पाको यागो गमनमिति व्यावृत्तं विशेषरूपं धातुवाच्यं सिद्धस्वभावमेकम्। सर्वधात्वर्थानुकूलं सामान्यरूपमपरम्, तदाख्यातवाच्यम्। सर्वत्र करोतिप्रत्ययस्यानुवृत्तेः। आख्याताभावे पाको याग इत्यादावप्रतीतेश्च।

तदुक्तं महाभाष्ये—कृभ्वस्तयः क्रियासामान्यवचनाः, क्रियाविशेषवचनाः पचत्यादय इति। भ्वस्त्योः प्रथमद्वितीयभावविकारवाचित्वम्। कृञस्त्वसिद्धव्यापारवाचिता। तेन सामान्यरूपत्वम्। तत्रान्योत्पादानुकूलत्वं भावनासामान्यलक्षणम्। तदेव भवितुः फलस्य प्रयोजकव्यापारो भावनेति। ननु धात्वर्थस्यासिद्धस्य साध्यत्वात्कथं साध्यान्तरसम्बन्धः? अर्थाक्षिप्तं साध्यत्वम् करणत्वमेव शाब्दमिति चेत् कथं करणेन सोमादेः करणस्य शाब्दस्सम्बन्धः? नाध्याहृतसाध्यत्वेन; तत्र मानाभावात्। न च यागे वैरूप्यम्, भावनावद्यागस्यैव साध्यसाधनत्वशून्यत्वात्। न च सोमादेः फलसम्बन्धः, धात्वर्थसम्बन्धे दृष्टार्थत्वात्। किञ्च काष्ठैः पचतीति न काष्ठानां पाकेऽन्वयः तस्य भावनायां करणत्वात्करणान्तरसम्बन्धायोगात् साध्यत्वे च वैरूप्यापत्तेः। न भावनया, धात्वर्थस्य तत्र करणत्वात्। एतेन पाकद्वारा भावनान्वयः परास्तः। पाकस्य करणस्य तत्सम्बन्धायोगात्। न चार्थाक्षिप्तपाकसाध्यकभावनान्वयः, तस्या अशाब्दत्वात्।

किञ्च–विक्लियन्ति पचन्तीति तण्डुलचैत्रादेः कर्तुर्व्यापारभेदेऽपि तण्डुलानां कारकप्रयोक्तृत्वाभावेनाकर्तृत्वाच्चैत्रादेरेव तथात्वादविशेषापत्तिः। किञ्च करोतेः सकर्मकत्वात् 'स्वर्गकामो यजेते'ति पुरुषविशेषणे स्वर्गकर्मत्वाश्रुतेः कथं भावना। न च तत्कल्पना, अन्योन्याश्रयात्। भावनया कर्मत्वं तस्माच्च भावनेति। अनन्वयश्च। न हि यजेत स्वर्गमित्यन्वयो घटते। अथ स्वर्गो धात्वर्थकर्म, न च स्वर्गाय यजेतेति सम्बन्धः, कर्माभावे भावनायोगात्। किञ्च भावयति घटमितिवत् भवति घटमिति स्यात्। न च प्रयोजककर्त्रोर्व्यापारभेदाद्भेदः, कर्तृप्रयोजकयोर्भेदाभावात्। कारकप्रयोक्ता हि कर्ता कुलाल एव न घटः, अनीप्सितत्वादसिद्धत्वाच्च। अतो व्यापारभेदाभावान्न धातुप्रत्ययोर्भिन्नोऽर्थः। अतो न धात्वर्थभिन्ना भावनेति सङ्क्षेपः।

अत्रोच्यते—अस्ति तावत्कर्तृप्रयोजकयोर्भेदः। 'स्वतन्त्रः कर्ता, तत्प्रयोजको हेतुश्च' इति स्मृतेः। प्राधान्येनोक्तव्यापारवत्वं कर्तृत्वम्। तदुक्तं हरिणा–'स्थालीप्रयत्ने कथ्यमाने स्थाली स्वतन्त्रैवेति'। तद्धेतुव्यापाराश्रयत्वं प्रयोजकत्वम्। असिद्धकर्तृत्वेन भवतिभावयत्योस्तथैव प्रतीतेश्च। तेन पचौ चैत्रस्य विक्लृत्तौ च तण्डुलानां व्यापारोऽर्थभेदः कर्तृभेदश्चेत्येके। तन्न; न हि धातुना व्यापार उच्यते, 'तदागमे ही' ति न्यायेन प्रत्ययार्थत्वात्। प्राधान्याच्च प्रत्ययार्थत्वम्। प्रत्ययार्थः प्राधान्येन' इति स्मृतेः। तदुक्तं वार्तिके—

"तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः।
प्रत्ययश्रुतिवेलायां भानात्साऽवगम्यते"॥ इति।

(तं. वा. २–२–१)

अस्त्यादौ कथमिति चेत्—तत्रापि शब्दात्साध्यत्वप्रतीतेः। अन्यथा अस्ति सत्ताभाव इत्यभेदापत्तेः। साध्यत्वञ्च व्यापारान्तरकृतमेव। तेन यत्र नामपदोक्तस्य धात्वर्थस्य कारकभावः स तिङ्प्रत्ययार्थः। तथोक्तं कारकवादे। न च धात्वर्थसामान्यं भावना, सिद्धरूपत्वात्तस्याः तेनासिद्धावस्था भावना। यथोक्तम्—

'धात्वर्थव्यतिरेकेण यद्यप्येषा न गम्यते।
तथापि सर्वसामान्यरूपेणान्याऽवगम्यते॥ इति।
(तं वा. २. १. १)

मण्डनमिश्रा अपि—

"कथ्यमानाद्रूपभेदात् द्विधा धात्वर्थसङ्गतिः।
अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति॥"

इति। अत्र पूर्वार्धे द्वावर्थौ–करोतिवेद्यमसिद्धावस्थं सर्वाख्यातानुगतं सामान्यमेकम् धात्वर्थरूपम् पाको याग इति सिद्धरूपं व्यावृत्तरूपमपरम्। तत्राद्यमसिद्धावस्थमन्योत्पादानुकूलं भावनेत्येकोऽर्थः। प्रत्ययार्थे भावनारूपे प्रकृत्यर्थयागादेर्द्विधा सम्बन्धः—यागं कुर्यादिति यागसाध्यमेकं रूपम्, यागेन कुर्यादिति यागकरणकमपरम्। तत्रान्योत्पादानुकूलं भावनेति द्वितीयः। यागस्वरूपनिष्पादनमर्थापत्त्या। तदुक्तं पार्थसारथिना—'यतो धातोः प्रत्यय उत्पन्नः तदर्थभिन्नैव भावना तत्कर्मिका तत्करणिका वा प्रत्ययेनोच्यते' इति। कर्मणि तिङ्क्षु प्रयोज्यप्राधान्यात्कर्मणि प्रथमा। यथोदनः पच्यते चैत्रेणेति। कर्तरि प्रत्यये प्रयोजककर्तृव्यापारप्राधान्यात्कर्तरि प्रथमा। यथोदनं पचतीति। तेनोभयत्रैवैकव्यापारप्रतीतेर्न मुख्या। अतएव विक्लृद्यन्ति तण्डुला इत्यत्र प्रयोज्यव्यापार एवार्थः। तेनाकर्मकत्वम्। न हि प्रयोज्यस्यान्यत्प्रयोज्यमस्ति। चैत्रः पचतीति सकर्मकत्वमेव। प्रयोजकव्यापारे प्रयोज्यनियमात्। प्रयोज्यव्यापाराप्रतीतेश्च गौणत्वम्।

**अर्थभावना**

सा च भावना द्वेधा—शाब्दभावना आर्थभावना चेति। प्रेरणाख्यस्य प्रयोजकलिङ्व्यापारस्य प्रवृत्तिरूपभाव्यफलकत्वात् भावनात्वम्। सा चाग्रे वक्ष्यते। द्वितीया तूच्यते। तत्र यत्न एवार्थी भावनेति राणकः। रथो गच्छतीत्यादौ तु वोढ्रश्वगतयत्नधीर्गौणी। खट्वादाविव स्त्रीत्वम्। रथः स्वयं गमनं न करोति किन्त्वश्वाद्यैः क्रियत इति प्रतीतेः। यद्यप्यधिश्रयण-फूत्कार-तण्डुलावापाद्या ओदनानुकूला नानायत्नाः। न च तेषां प्रत्येकमाख्यातवाच्यत्वं भावनात्वं वाऽस्ति, तथापि प्रयत्नसमुदायः तन्निष्ठमन्योत्पादानुकूलत्वं वा भावना। तेन यत्नत्वेनाख्यातवाच्यता सर्वशिरोमण्यादितार्किकोक्ता परास्ता। तदुक्तं वार्तिके—

'यदा त्वाद्यपरिस्पन्दात्प्रभृत्याफललाभतः।
यत्नाः पूर्वापरीभूताः क्रिया सा वर्तते तदा॥'
(तं. वा. २. १. १)

इति। विशेषस्तु **मत्कृताख्यातवादशिरोमणिटोकायां ज्ञेयः।**

"तिङ्वाच्यो हि करोत्यर्थः सामानाधिकरण्यतः ।
प्रयत्नश्च करोत्यर्थः तदन्यानुपलम्भनात् ॥
चेतनप्रेरकत्वञ्च विधेस्तद्विषयत्वतः ।
काष्ठाद्यप्यन्यथा कस्मान्न प्रेरयति वायुवत् ॥
धात्वर्थव्यतिरिक्तातः प्रयत्नाख्याऽर्थभावना ।
यजत्यादिवदाख्यातवाच्यतेति समञ्जसम् ॥
(न्या. सु. २. १. १)

इति राणकादितत्त्वम्। नन्वेवं यत्नस्य भावनात्वे तस्याकर्मकत्वात् करोतौ कर्माकाङ्क्षा न स्यात् । न; अनन्योत्पादानुकूलयत्नत्वं तत्त्वम्, यत्ननिष्ठमनुकूलत्वं वा भावना। अयमेव करोत्यर्थः । सा च सकर्मिकासिद्धरूपा च सर्वत्र प्रतीयते । अकर्मकेऽपि धातौ भावनाकर्मास्त्येव। स्वास्थ्यकामः शयीत आसीत वेति प्रयोगात्। धात्वर्थकर्माभावात्तु अकर्मकत्वम्। भावनाशब्दोऽपि न तद्वाचकः, सिद्धरूपप्रतीतेः। सा च सर्वाख्यातार्थः । यद्यपि धावति शेते इत्यादौ कर्माभावात्तदसम्भवः, तथापि लडादौ प्रयोज्यव्यापारेण प्रयोजकव्यापाराक्षेपः। अभावितस्य भवनायोगात्। भवतिकर्मा च प्रयोज्यः। तदुक्तम्—

'भवत्यर्थस्य कर्ता च करोतेः कर्म जायते' ॥ इति ।

एवं पचतीत्यत्र प्रयोजकमात्रव्यापारे प्रयोज्यव्यापाराक्षेपः। ण्यन्तभवतौ तूभयप्रतीतेर्मुख्या वाच्या। अत एव तस्य करोतिपर्यायत्वम्।

ननु को वृक्षः ? शिंशपा इत्यत्रेव सामान्यविशेषयोः कथं पर्यायत्वम् ? तत्त्वसहप्रयोगात्। नैवम्; धात्वर्थावच्छेदेन विशेषत्वात्, प्रत्ययांशे सामान्यार्थत्वात् करोतौ तु कर्तृसङ्ख्याद्यर्थः प्रत्ययः। शेतेऽस्ति विद्यते इत्यादावकर्मके सुखादिकर्माक्षेपात् भावनाबोध इत्येके। यद्वा घटो भवति इत्यादौ घटावयवोऽवयविनं करोतीत्यर्थः। अस्त्यादौ भावनोक्तिः प्रौढिमात्रमिति राणकः। यद्यपि स्वर्गानुकूलो व्यापारो यागस्तद्धेतुः न भावना। तत्र यागस्य करणत्वायोगात्। न चान्यः स्वर्गानुकूलो व्यापारोऽस्ति। नापि प्रयत्नसमुदायो भावना, तस्य समुदायिभ्योभेदाभावेन यागस्य करणत्वायोगात्, तथापि यजिनिष्ठेऽन्योत्पादानुकूलत्वे न कोऽपि दोषः। यागजनको हि यत्नो यागे साङ्गे कृते स्वर्गफलो भवति। तव तु न यागस्य भावनाप्रतियोगिककरणत्वम् स्वर्गस्यैव साध्यत्वात्। न हि भावनाऽपि यागस्य साध्या, एकस्य साध्यद्वयायोगात्। किन्तु दण्डेन घटं करोतीत्यत्र यथा न दण्डस्वरूपेण साध्ये घटेऽन्वयः, घटस्यासिद्धत्वात्, किन्तु यस्यां कृतौ दण्डः करणत्वेनावच्छेदकः तस्यां घटः कर्मत्वेनेत्यनयोः साध्यसाधनभावः। फलोद्देशप्रवृत्तकर्तृव्यापारव्याप्यत्वमेव हि करणत्वम्। तच्च यत्नसमुदायपक्षेऽनुकूलत्वपक्षे वा निर्दोषमेवेति वयं प्रतीमः। अत एव कथं भावनायां यागस्य करणत्वम् ? स्वर्गस्य साध्यत्वादेकस्य साध्यद्वयायोगादिति मूर्खशङ्का परास्ता। ये तु वैयाकरणाः धात्वर्थमेव क्रियारूपमाहुः तेषां ज्योतिष्टोमेनेति करणत्वस्यान्वयो न स्यात्, स्वस्य

स्वं प्रति करणत्वासम्भवात् । ननु धातूनां द्वे रूपे वाच्ये । सामान्यरूपं विशेषरूपञ्च ... । तत्रान्त्यस्य आद्ये भावनारूपे करणत्वं युक्तमिति चेन्न; तद्भावनारूपं धातुमात्रस्य वाच्यं तिङ्युक्तस्य वा ? नाद्यः, पक्तव्यः पाचक इत्यादिकृदन्तेऽपि भावनावाचित्वापत्तेः । नान्त्यः; तदागमे हीति न्यायेन तिङ एव वाचकत्वात् । किञ्च तत्रावश्यं करणत्वान्वयार्थे धात्वर्थस्य क्रियात्वे काष्ठैः पाक इत्यपि सम्बन्धस्स्यात् । यत्तु केनचिदिष्टापत्तिरित्युक्तम् तन्न; तथात्वे क्रियत इति क्रियापदाध्याहारो न स्यात् । न हि तस्य कारकान्वयं विनाऽन्यत्कृत्यमस्ति । 'कृदभिहितो भावो द्रव्यवद् भवतीति' वार्तिकविरोधात् । अथ कारकत्वार्थं द्रव्यवद्भावः, तर्हि कथं क्रियात्वम् ? न हि कारकं क्रिया सा वा कारकं क्रिया क्वचिदस्ति । पाक इति सिद्धरूपत्वाच्च कथं क्रियात्वम् कथं वा करणान्वयः ? न हि सिद्धं साध्यं भवति । अथान्यं प्रति क्रियात्वमन्यत्र कारकत्वमविरुद्धमिति ब्रूषे तर्ह्येकेन शब्देन क्रियात्वेन कारकत्वेन सिद्धत्वेन साध्यत्वेनाभिधानं कथं स्यात् ? वैरूप्यापत्तेः विरुद्धत्रिकद्वयापत्तेश्चेति स्वगुरुं पृच्छेः, यदि सोऽस्ति भावप्राधान्यात्पाक इत्यस्याख्यातत्वापत्तिः । सुप्प्रत्ययश्च न स्यात्, भावप्रधानमाख्यातमित्युक्तेः । भावयेदित्यत्र तु प्रकृत्यर्थानुवादकः कर्तृसङ्ख्याद्यर्थो वा प्रत्ययः । या तु किं केन कथमित्यंशत्रयाकाङ्क्षा सा भावनाया विधिविषयत्वप्रतीतावेव । कृतेः कर्तव्यत्वबोधे एव हि फलाकाङ्क्षा किं भावयेदिति । तत्र पुरुषविशेषणमपि स्वर्गो भाव्यो लक्षणया, विशेष्ये बाधात् । तस्माच्च यागे करणत्वं लक्ष्यते । सोमादि च यागनिरूपितकरणत्वात्करणानुग्राहकत्वादितिकर्तव्यता ।

ये तु तार्किकाः—ज्योतिष्टोमाभिन्नो यागः स्वर्गसाधनमिति यागप्रधानं बोधमाहुः, ते कृतिमेव समुद्रे क्षिपन्तः सोमादिकारकाणां यागेऽन्वयासम्भवात् (दूयन्ते) एव । लक्षणा तु पदान्तरवशात्, एकैकस्यान्वयाद्वा ? नाद्यः; आवृत्तिप्रसङ्गात् । साध्यत्वेन वाजपेयाधिकरणवद्वैरूप्यापत्तेः । तत्रापि गुणविध्यापत्तेश्च । न च यागस्वर्गयोरेककृतौ साध्यत्वं युक्तम्, एकस्यां सजातीयकारकद्वयायोगात् । भावनाद्वयस्य चाभावात् । न च कृतेः साधनत्वाभावे तत्साध्यत्वं यागे युक्तम् । शाब्दसाध्यत्वस्य शाब्दकरणापेक्षत्वात् । तत्र साधनद्वयस्य साध्यद्वयस्य वाऽभिधानमापद्येतेति यत्किञ्चिदेतत् । तस्मान्न कृतिसाध्यत्वमिष्टहेतुत्वञ्च समकक्षं त्रिशिष्टञ्चाशक्यम् । नाप्यन्त्यः; न हि यागः स्वर्गसाधनमिति यागः प्रधानं युक्तः; तृतीयान्तनामधेयान्वयायोगात् । स्वस्थ स्वं प्रति करणत्वायोगात् । न चाभेदस्तृतीयार्थः, पाणिन्यनुशासनाभावेन मानाभावात् । धान्येन धनी मैत्रेण पुत्रीत्यादौ इत्थम्भूतलक्षणे तृतीया कार्यकरत्वे लक्षणा वा । अस्तु वाऽन्यत्राभेदस्तृतीयार्थः न त्वत्र । उद्भिदेत्यादौ यागस्य करणत्वाभावात्सामानाधिकरण्याभावे नामत्वासिद्धावभेदस्यैवासिद्धेः । अभेदान्नामत्वं तस्माच्चाभेद इत्यन्योन्याश्रयापत्तेः । न च मत्वर्थलक्षणापत्तेर्नामत्वम्, यागस्य प्रथमान्तत्वे मत्वर्थलक्षणाभावात् । वैयधिकरण्ये हि गुणविधिरेव स्यात् । तस्माद्धात्वर्थस्य लक्षणया करणत्वे एव नामत्वं सिद्ध्यति नान्यथा । अत एव लक्षणयैव हेतुताधीसम्भवान्न विधेरपि तद्वाच्यम् ।

अनन्यलभ्यो हि शब्दार्थः। न च लक्षणया तद्धीसम्भवे वाच्यत्वं युक्तम्। अन्यथा गङ्गापदे तीरवाचितापत्तेः। न च कारकाणां मिथस्सम्बन्धोऽस्ति। येन यागस्वर्गयोः सः स्यात्। न हि दण्डेन घटम् काष्ठैः पाक इति वा सम्बन्धोऽस्ति। घटस्यासिद्धत्वात् करोतीत्यादिक्रियापदाध्याहारोच्छेदापत्तेश्च। एतेन धात्वर्थस्य क्रियारूपत्वं परास्तम्। तेन कृतिद्वारक एवानयोस्सम्बन्धो वाच्यः। तत्सिद्धं प्रयत्नोऽन्योत्पादानुकूलत्वं वा भावनेति। यत्नश्च पाकेऽहं प्रयते यागेऽहं प्रयते इति धात्वर्थेनैव निरूप्यः। विशेषो मत्कृतवार्तिकटीकायां भावार्थपादे ज्ञेय इति सङ्क्षेपः।

इति रामकृष्णभट्टसूनुकमलाकरभट्टोन्नीतेऽर्थभावनावादः।

## विधितत्वनिरूपणम्

श्रीरामं पितरौ नत्वा कमलाकरशर्मणा।
विदुषामपि दुर्बोधं विधितत्त्वं निरूप्यते॥

तत्र न तावदिष्टसाधनत्वं लिङर्थः; तज्ज्ञानस्यैव प्रवर्तकत्वादिति तार्किकमतं युक्तम्। तद्धि केवलम् कृतिसाधत्वविशिष्टं वा प्रवर्तकं वाच्यम्। नाद्यः, चन्द्रमेघच्छायादौ व्यभिचारात्। न च तत्र कृत्यसाध्यताज्ञानं प्रतिबन्धकम्, तदभावस्यापि प्रवृत्तिहेतुत्वेन वाच्यतापत्तेः। ननु यज्ज्ञानं प्रवर्तकं तस्य वाच्यत्वमिति इष्टहेतुत्वं वाच्यम् न तु प्रतिबन्धकाभावस्तथेति न वाच्यतेति चेत्—न; कृतिसाध्यत्वेऽपि तदापत्तेः, तज्ज्ञानस्यापि प्रवर्तकत्वात्। किञ्च भावनायामिष्टसाधनत्वं बोध्यते? यागे वा? नाद्यः, कृत्यन्तरापत्तेः। (नान्त्यः,)[1] लक्षणया तत्प्रतीतौ वाच्यत्ववैयर्थ्यात्, आख्यातार्थकृतेरनन्वयाच्च। अथ यागानुकूलकृतिमानिति तदन्वयः, सिद्धं तर्हि कृतिसाध्यत्वस्यापि वाच्यत्वमिति द्वितीयपक्षापत्तिः। एकविशिष्टस्येतरस्य वाच्यत्वे विनिगमकाभावात्। अर्थात्तत्प्रवर्तकं नाभिहितमिति चेत्—इष्टहेतुत्वेऽपि तथाऽस्तु। यत्तु चतुर्थाध्याये तन्त्ररत्ने विरोधाधिकरणे च पार्थसारथिनोक्तम्—कर्तुरिष्टसाधनत्वं स्वविषये विधिनोच्यत इति तन्न, तद्विषयस्य भावनाया इष्टहेतुत्वे भावनान्तरापत्तेः। नान्त्यः कृतिं प्रति साध्यत्वे इष्टं प्रति च साधनत्वे वाच्ये वाजपेयाधिकरणवद्वैरूप्यापत्तेः। कथञ्च साध्यद्वयं साधनद्वयञ्चैककृतावन्वेतु? न च नानार्थवत्स्यादिति वाच्यम्। कृतेर्यागं प्रति साधनत्वे कृत्यन्तरापत्तेः। न हि कारकाणां कृतिं विना सम्बन्धोऽस्ति। तथात्वे क्रियापदाध्याहारोच्छेदापत्तेः, करणभूता च तृतीया कृतेस्स्यात्। एकस्याञ्च यागस्वर्गयोर्द्वयोस्साध्यत्वायोगात् कृतिसाध्यत्वेष्टहेतुत्वयोर्विशेषणत्वे नियामकाभावात्। द्वयोर्वाच्यत्वे शक्तिद्वयापत्तेरेकशक्तौ च निषेधे कृतिसाध्यत्वाभावे प्रत्यक्षविरोधात् भावनाक्षेपेण तद्धीसम्भवाच्च। किञ्च नित्येषु काम्यवदिष्टहेतुत्वाप्रतीतेरवश्यकर्तव्यत्वाभावे नित्याकरणे दोषो न स्यात्। न चावश्यकर्त्त-

१. यागेन स्वर्गं कुर्यादित्यनेन लक्षणयेष्टसाधनत्वं प्रतीयत इति भावः।

व्यतां विनेष्टसाधनत्वं सिद्धम्। तेनान्योन्याश्रयस्स्यात्। सिद्धे हि प्रत्यवाया-भावस्य साध्यत्वे तद्धेतुत्वादवश्यकर्तव्यताम्, तथा च तत्कल्पनमिति। एवम-करणात्प्रत्यवाये कल्पिते करणात्तदभावः फलम्, तत्सिद्धौ चाकरणात्प्रत्यवाय इति। किञ्च इतोऽपि नेष्टहेतुत्वं लिङर्थः। यागेन स्वर्गमिति लक्षणया तद्धा-सम्भवात्। अन्यथा गङ्गापदेऽपि तीरवाचितापत्तेः अवश्यञ्च यागेनेति लक्षणा वाच्या, अन्यथा यागसामानाधिकरण्याभावे उद्भिदादौ नामत्वासम्भवाद् गुण-विध्यापत्तेः। न चाभेदस्तृतीयार्थः, नामत्वासिद्धावभेदासिद्धेः। परस्पराश्र-याच्च।[1] न चाव्यक्तत्वात्सोमधर्मप्राप्तेर्द्रव्यविधिर्व्यर्थ इत्यभेदान्नामत्वमिति पक्ष-धरमिश्रोक्तं युक्तम्। द्रव्यविधावव्यक्तत्वाभावेन सोमाप्राप्तेः। तेन परस्परा-श्रयः। यद्यपि देवताभावादव्यक्तत्वं स्यात् तथापि नैमित्तिकेन [2]फलचमसेनेव काम्येनोद्भिदा बाधः केन वार्येत? यत्तु पार्थसारथिनोक्तम्-इष्टसाधनत्वमेव प्रवर्तनात्वेन विध्यर्थः, कर्तव्यताबोधस्त्वर्थात्। 'श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते' इति वार्तिकात्,

कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः।
विपरीते त्वकर्तव्यमिति तद्विषये ततः॥
पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्॥

इति विधिविवेकेऽप्युक्तेर्मण्डनमिश्रस्यापीदमेव मतमिति। तन्न, अयं हि प्रष्टव्यः—किमिष्टसाधनत्वप्रकारकं ज्ञानं विधितोऽस्ति न वा? नाद्यः, त्वयाऽन-ङ्गीकारात् [3]पूर्वोक्तदोषगणाच्च। प्रवर्तनात्वे शक्तिरिति हि ते मतम्। अन्त्ये प्रवर्तनैवार्थः स्यात्। न हि प्रमेयत्वेन तज्ज्ञानं प्रवर्तकम्।

किञ्च न्यायरत्नमालायामिष्टसाधनत्वस्य प्रवर्तनात्वं त्वयैवोक्तम्। षष्ठे शास्त्रदीपिकायान्तु लिङः प्रवर्तकत्वात् तन्निष्ठभावनाभिधायाः प्रवर्तनात्वं ब्रूषे तेन परस्परविरोधाच्छून्यहृदय एव। द्विविधादपि च सिद्धरूपत्वात्कथमध्ययन-विधौ कर्तव्यतया सम्बध्येत? तां विना वा कथं त्र्यंशान्वयः स्यात्? विस्तरेण चाभिधादेर्वाच्यत्वं **भावनाविनोदे**ऽस्माभिर्निरस्तम्, तदनुसारी बालप्रकाशकारो मूर्ख एव। किञ्च लिङादेः प्रवर्तकत्वं निर्विवादम्। तदुक्तं वार्तिके—

---

१. उद्भिदा यजेत पशुकाम इत्यत्र देवताया अश्रवणात् अविहितदेवताकत्वसादृश्येन सोम-धर्मप्राप्तेः तत्र उद्भिद्द्रव्यगुणविधिर्व्यर्थ इति तस्याभेदान्नामधेयत्वमेवेत्याशयः।

२. 'यदि राजन्यस्सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य तमस्मै भक्ष प्रयच्छेत्' इति वाक्यविहितो भक्षः फलचमसः। स च सोमस्य यथा बाधकस्तथेत्यर्थः।

३. इष्टसाधनत्वस्य विध्यर्थत्वे तत्किं भावनायां बोध्यते? उत यागे? नाद्यः, कृत्यन्त-रापत्तेः। नान्त्यः, लक्षणया तत्प्रतीतौ वाच्यत्ववैयर्थ्यात् इत्यादीनि यानि दूषणानि पूर्वोक्तानि तानि आपद्येरन् इति भावः।

'अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः' इति।

तच्च प्रवृत्तिकर्तृत्वं, न तु ज्ञापकत्वं कर्तृवाचि ण्वुल् प्रयोगात्। तच्च स्वव्यापारबोधनेनैव। अन्यथा गुरुस्त्वां प्रवर्तयतीत्युक्तौ शिष्यस्यापि तत्त्वापत्तेः। न चेष्टसाधनत्वं तद्व्यापारः ([1]पदार्थनिष्ठत्वात्) नापि तज्ज्ञानं, वेदे तदभावात्। ज्ञानेच्छयोः स्वरूपसत्योः प्रवर्तकत्वेन वाच्यत्ववैयर्थ्याच्च। न च शब्दस्यार्थज्ञानं व्यापारः, गुर्वादेस्तु तज्जनकशब्दोच्चारणकर्तृत्वात्प्रवर्तकत्वम् वेदे तु लिङोऽर्थज्ञानं व्यापारः, स चातद्वतोऽपि व्याप्तिस्मृतेः परामर्श इव व्यापारत्वं भजत इति वाच्यम्, तण्डुलक्रेतुरपि पाचकत्वापत्तेः प्रेषणाध्येषणानुज्ञोपदेशानां भेदश्च न स्यात्। इष्टहेतुतायास्तुल्यत्वात् यागेन स्वर्गमिति लक्षणया तद्धीसम्भवे तीरवद्वाच्यत्वायोगाच्च। किञ्च इष्टसाधनत्वे वाच्ये वैरीष्टसाधनेऽपि प्रवृत्तिस्स्यात्। न च कर्त्रिष्टसाधनत्वमर्थः, अशाब्देन कर्त्रा शाब्दतदन्वयायोगात्। न च कर्त्रैकत्वं शाब्देन कर्त्रैवान्वयः तस्यैकप्रत्ययेन भावनात्वेऽङ्गावतारन्यायेन[2] आरुण्यवदमूर्तस्याप्यार्थिकद्रव्यपरिच्छेदद्वारा तदुपपत्तेः। न चेष्टहेतुत्वं भावनाङ्गम्, येन कर्त्रान्वियात्। किञ्च

"द्रव्यक्रियागुणदीनां धर्मत्वं स्थापयिष्यत"

इति वार्तिकात् गोदोहनादिद्रव्यगुणजातीनामिष्टहेतुत्वं तिङाऽभिधातव्यम्। न च तद्युक्तम्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थवाचित्वात्। द्रव्यदीनाञ्च प्रकृत्यर्थत्वाभावात्। तस्मादर्थिकस्येष्टसाधनत्वस्य प्रवर्तकत्वं वार्तिकदावुक्तमिति नेष्टहेतुत्वं वाच्यम्। अत एव वार्तिके भावार्थाधिकरणे 'तत्रार्थात्मिकायां लिङादिशब्दानां पुरुषं प्रति प्रयोजकव्यापारः सा द्वितीया शब्दधर्मोऽभिधात्मिका भावनाविधिः' इति (तं० वा–२.१.१.) ग्रन्थेनालौकिकी प्रेरणा प्रवर्तनाविशेषः शब्दधर्म उक्तः। अतः पार्थसारथिभ्रान्ति एव। न ह्यभिधानाद् घटः शब्दधर्मो भवति। विशेषस्तु मत्कृतवार्तिकटीकायां ज्ञेयः। कथं तर्हि प्रेरणासिद्धिरिति चेत् श्रृणु। पुरुषो हि द्विधा प्रवर्तते-कश्चित्स्वेच्छया कश्चित् परप्रेरितः। गुरुप्रेरितोऽहं करोमि इत्यनुभवात्। गुर्हि प्रवर्तनयेच्छाहीनमपि पुरुषं प्रवर्तयति। प्रवर्तकत्वं च प्रवर्तनोत्पादकत्वम्, न तु ज्ञापकत्वम्। गुरुस्त्वां प्रवर्तयतीत्युक्तौ शिष्यस्यापि तत्त्वापत्तः। प्रवर्तना च प्रवृत्तिहेतुः प्रवर्तयितुर्व्यापारोऽहमेनं प्रवर्तयामीति स्वसंवेद्यः प्रैषादिः। वेदे तु वक्तुरभावात् लिङः प्रेरणाख्योऽलौकिको धर्मः। कथमलौकिके शक्तिग्रह इति चेदित्थम् व्युत्पित्सुर्बालो हि रोदनेन स्तनदाने मातुः प्रवृत्तिं दृष्ट्वा स्वीयप्रवर्तनाज्ञानमेव हेतुं परिकल्प्य गुरोर्गामानयेति

१. "पदार्थनिष्ठत्वात्" इति भाव्यमिति प्रतिभाति। अन्यथा अर्थान्वयो न संभवति। पदार्थनिष्ठत्वादित्यस्य-इष्टसाधनत्वं तु यागादिक्रियायामेवास्ति, न तु पुरुषादौ, अतः-तस्य व्यापारत्वं न सम्भवतीति भावः।

२. आनर्थक्यात्तदङ्गेष्विति न्यायेनेत्यर्थः।

वाक्यात् प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वाऽन्यासम्भवात् प्रवर्तनाज्ञानस्यैव हेतुत्वं कल्पयति। लिङ्श्रवणोत्तरप्रवृत्तेस्तस्यैव प्रवर्तनावाचित्वं निश्चिनोति। तत्रेष्टसाधनत्वातिरिक्ता केयं प्रवर्तनेति चेत्—शृणु? गामानयेत्युक्ते प्रवृत्तस्य गवानयनाभावेऽपि ममाज्ञां कृतवानिति प्रतीतेः। इतोऽपसरेत्युक्ते स्वयमनपसृते बलादपसारितेऽपि ममाज्ञां न कृतवानिति व्यवहारात् अहमेनं प्रवर्तयामि अहं प्रवर्ते इति प्रवृत्त्यनुकूलः प्रवर्तकधर्मः प्रवर्तना नाम सर्वस्वसंवेद्यः। स चेष्टहेतुत्वाक्षेपात् प्रवर्तको न स्वत इत्यन्यदेतत्। स च व्यापारः पुंधर्मत्वाल्लोके उत्तमस्य नीचं प्रति प्रैष इति, नीचस्योत्तमं प्रति अध्येषणा, अभ्यर्थनेति, समंप्रति अनुज्ञेति अप्राप्तेऽर्थे उद्देश्य ( उपदेश ) इति चोच्यते। न च ते विशेषा वाच्याः, व्यभिचारात् किन्तु प्रवर्तनैव। किञ्च लोके आज्ञाभ्यर्थनयोः कर्मफलं प्रवर्तकनिष्ठं, न नियोज्यनिष्ठम्। अनुज्ञानुप्रवृत्तविषयिणी। तेषु च नोपदेशत्वम्। न हि गामानय मामध्यापय, इन्द्रागच्छ, यथेप्सितं कुरु इत्यादीनामुपदेशत्वम्। न वा सन्ध्यामुपासीत भिक्षां चर इत्यादीनां आज्ञाप्रतीतिः, इष्टासाधनत्वस्य वाऽविशेषात् एषां भेदो न स्यात्। स चोपदेशो वेदेऽपि तुल्यः। तदुक्तं सूत्रे—'तस्य ज्ञानमुपदेशः' इति। लोके प्रवर्तनात्वेन सामान्यबोधे वेदे प्रैषादीनां पुंधर्माणां बाधात्पक्षधर्मताबलादाक्षिप्तः प्रेरणाख्योऽलौकिको विशेषो यूपाहवनीयादिवल्लक्षणया प्रतीयते। अतः प्रवर्तनात्वेन शक्तिग्रहो युक्तः। तदुक्तं वार्तिके 'पूर्वसम्बन्धानुभवापेक्षेण विधिज्ञानेन' इति। स च प्रैषादिवत्प्रवर्तयितुर्लिङो धर्मः, तस्य च सन्निधानाल्लिङीयत्वसिद्धेर्न शब्दस्वरूपाभिधानम्। तदुक्तम्—

'विशिष्टग्रहणं नेष्टमगृहीतविशेषणम्।
अभिधानभिधाने तु न केनचिदिहाश्रिते॥

इति। गुर्वादिवल्लिङः फलादातृत्वाल्लिङ्व्यापारे ज्ञातेऽपि कथं प्रवृत्तिरितिचेत्—प्रवृत्तिविषयस्येष्टसाधनत्वाक्षेपादिति ब्रूमः। प्रवर्तना हि यत्नविषया, [1]स चेच्छाजन्यः। सा च पुमर्थे एव स्वर्गादौ भवन्ती साधनं विना तदसिद्धेस्तत्र सङ्क्रान्ता यागादेरिष्टहेतुत्वं विनेच्छाभावे प्रवृत्त्ययोगात्तदाक्षिपति। न च प्रवर्तनाकल्प्येष्टहेतुताधीजन्येच्छयैव प्रवृत्तेः कारणकारणत्वेनान्यथासिद्धेः प्रेरणा व्यर्थेति वाच्यम्, प्रवर्तनाऽसिद्धाविष्टहेतुत्वासिद्धेः। एवं निषेधे निवर्तनयाऽनिष्टहेतुत्वं कल्प्यम् ( निवर्तनासिद्धौ अनिष्ट ) इष्टहेतुत्वाभावान्निवृत्त्यसिद्धेः। तस्मात्सिद्धा प्रेरणा सैव वार्तिके भावार्थपादेऽप्युक्तेति दिक्।

इति कमलाकरभट्टकृते मीमांसाकुतूहले प्रेरणावादस्समाप्तः।

## विधिविभागः

विधिश्चतुर्धा। तदुक्तम्—

'उत्पत्तिविधिर्नामैको यो द्वितीये विचार्यते।
विनियोगविधिस्त्वन्यः तृतीयाध्यायगोचरः॥

---

1. यत्न इत्यर्थः।

चतुर्थादौ षष्ठवर्जं प्रयोगविधिचिन्तनम् ।
अधिकारविधिर्नाम षष्ठाध्यायस्य गोचरः ॥

मानान्तरानवगतकर्मबोधक आद्यः यथा 'अग्निहोत्रं जुहोति' इति । विनियोगादिकन्तु 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादेस्सिद्धम् । शेषस्य शेषिणा सह सम्बन्धबोधको विनियोगविधिः । कर्मणि पुंसः फलभोक्तृत्वबोधकोऽधिकारविधिः । साङ्गकर्मानुष्ठापकः प्रयोगविधिः । तत्र प्रायेण फलविधिरेव तत्त्वं भजते । एते चापूर्वविधेरेव भेदाः । 'समिधो यजति' इत्युत्पत्तिविनियोगपरः । 'ज्योतिष्टोमेन स्वर्गकामः' इति विनियोगादित्रयपरः । 'सोमेन यजेत' इत्युत्पत्तेस्सिद्धत्वात् । न च ज्योतिष्टोमवाक्ये उत्पत्तिर्यागस्य, तदनुवादेन सोमद्रव्यविधिः शङ्कनीयः, ज्योतिष्टोमस्य गुणपरत्वे तदवरुद्धे द्रव्यविध्ययोगात् । नामत्वे च सोमाप्राप्तौ सोमसम्बन्धाभावे नामत्वायोगात् । न चाग्निहोत्रवत् भाविसम्बन्धात्तत्वम्, प्रकरणप्राप्तभाविसम्बन्धेनेष्टिपशुनामत्वापत्तेः । पूर्वसम्बन्धस्य बलवत्वादित्याकरे स्पष्टम् । 'उद्भिदा यजेत' इत्यादौ चतुष्टयरः । तत्रोत्पत्तिविध्यादौ कर्मस्वरूपविनियोगादिकमेव विवक्षितम्, कर्तव्यतांशे तु प्रयोगविधिः प्राप्तानुवादः । क्वचित्तु अनुत्पन्नस्य विनियोगात् उत्पत्तिविधिराद्यः । सोमविशिष्टयागविधौ यागोद्देशेन सोमविधिरिव । कथं यागस्य सोमं प्रत्युद्देश्यता ? भावनां प्रति करणत्वात् वाजपेयाधिकरणवद्वैरूप्यापत्तेरिति चेत्— श्रुतविधौ यागस्य करणत्वमेव । कल्पिते तु विशेषणविधौ यागस्योद्देश्यत्वम् । कल्पिते हि विशेषणविधौ सोमस्य करणत्वेनैव यागं प्रतिविधानम् । कारकं विना केवलद्रव्यस्याविधेयत्वात् । तदुक्तं वार्तिके—

'विधित्वं श्रौतमार्थं वा भावना कारकाश्रयम् ।
ताभ्यान्तु व्यतिरिक्तेऽर्थे नैकमप्येतदिष्यते ॥ इति ।

तत्र सोमकरणस्य शाब्दत्वात् यागस्य कर्मत्वं शाब्दम् अत एव श्रुतविधौ यागप्रतियोगिकं करणत्वं भावनान्वयि करणानुग्राहिणा हीतिकर्तव्यता भावनान्वयिन्येव । यदपि भावनान्वयः पश्चादंशयोरार्थिकोऽन्वयः इति; तत्रापि भावनान्वयः करणद्वारैव । आर्थिकत्वं कल्प्यविशेषणविधिना । यथा वक्ष्यति–'नावान्तरक्रियायोगात' इति । एतेनैकपदोपात्तस्यापि यागस्य कल्प्यकरणत्वापेक्षया सोमस्य प्रत्यक्षश्रुत्या भावनायां करणत्वं परास्तम् । धात्वर्थान्वयं विना भावनान्वयाभावात् । अन्यथेतिकर्तव्यतात्वमेव न स्यात् । तदुक्तं सप्तमनवमयोः—

भावनान्वयमात्रेण नानयोस्तुल्यकल्पता ।
अपरित्यक्तरूपत्वात् गुणप्राधान्यसम्भवात् ॥ इति ।

अन्वयो यागस्य विशिष्टत्वमेव स्यात् । तदयं क्रमः—आदौ करणयोः क्रियान्वयः श्रौतयागावरुद्धे च द्रव्यस्य तदयोगात् सोमविशिष्टस्य तदन्वयः । ततो विशेषणसम्बन्धं विना विशिष्टत्वायोगाद् यागोद्देशेन सोमविधिः । ततः श्रुतविधौ क्रियान्वयनिर्वाहार्थं करणानुग्रहद्वारा वक्तुं करणत्वोपरि मत्वर्थो लक्ष्यते । अत एव

सोमकरणकेनेति 'सरस्वत्या दक्षिणे तीरे यजेत' 'प्राकाशावध्वर्यवे ददाति' इत्यादौ यागे सम्प्रदानत्वमधिकरणत्वं वा प्राप्तम्, यस्यानुवादस्स्यात्। तत्रावश्यं प्रत्ययान्ते लक्षणा वाच्या। ततश्च करणत्वेऽपि सैव गतिः कारकत्वाविशेषात्। एतद्वङ्क्रयधिकरणे तन्त्ररत्ने स्पष्टम्। ये तु करणत्वे एव मत्त्वर्थे लक्षणा, द्वयोः-करणयोरन्वयायोगात्। सम्प्रदानत्वादेस्तु भावनायामेवान्वयान्न मत्त्वर्थलक्षणेत्याहुः; ते मूढा एव, न हि तत्रापि करणत्वान्वयं विना भावनान्वयोऽपि। तदुक्तम्

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ।। इति।

(तं. वा. १. ४. २)

केवलद्रव्यस्याक्रियात्मकत्वेनाविधेयत्वाच्च। किञ्च सम्बन्धनिमित्ता लक्षणा। न च सोमस्य यागे करणत्वं विनाऽन्यस्सम्बन्धोऽस्ति। तेन कल्प्य विशेषणविधिलभ्यं करणत्वं सम्बन्धमादाय श्रुतसामानाधिकरण्यार्थं मत्वर्थः। तद्वत्वेन लक्ष्य इत्यगत्या करणत्वे लक्षणा। अत एव सूक्तवाकेन[1] अरुणया, ऐन्द्रचा इत्यादौ विशिष्टविधावपि श्रुत्या विनियोगः, न धात्वर्थगतकरणत्वानुवादः। तस्मात् प्रत्ययान्ते एव मत्त्वर्थलक्षणा। ये तु सोमप्रातिपदिके मत्त्वर्थलक्षणा, तृतीया तु यागगतकरणत्वानुवादिका। तथा च सोमशब्देन तद्वन्तं यागं लक्षयित्वा सोमवतेति मत्वर्थलक्षणा स्यादिति शास्त्रदीपिकारीत्याहुः, ते मूर्खा इत्युपेक्ष्याः। अरुणया सूक्तवाकेन पशुना ऐन्द्रचा सर्वत्र कारकविध्यङ्गीकारात्। न हि तत्र करणत्वानुवादः कस्यापीष्टः। तदुक्तं वार्तिके—

विभक्त्यर्थानुवादाच्च विधेस्स्यान्नाम्नि लाघवम्।
गुणपक्षे विधेयत्वं सङ्ख्याकारकयोरपि ।। इति

गुणपक्षे विशिष्टविधौ यागानुवादे च कारकस्य विधेयत्वं वदन् सोमेनेत्यत्र यागगतकरणत्वानुवादाभावाद्यागप्रतियोगिककरणत्वं विस्पष्टं विधेयमाह आर्थिकमन्यत्करणत्वं कल्प्यत इति। न; ऐन्द्रीविशिष्टविधौ मन्त्रस्य करणत्वे कल्प्यप्रत्यक्षश्रुत्योः कल्प्यश्रुतेर्बाधो न स्यात्, द्वयोः कल्प्यत्वाविशेषात्। सूक्तवाकेनेति च प्रत्यक्षश्रुतिबलात् मान्त्रवर्णिकदेवतायागफलादिकल्पनं सर्वमुत्सीदेत्। वाजपेयाधिकरणे तु यागस्य श्रुतविधौ भावनायाञ्च तन्त्रेण गुणफलाभ्यामन्वयान्मत्वर्थलक्षणाभावमशङ्क्य वैरूप्यापत्तेर्न तन्त्रेणान्वयः, किन्तु कल्प्यविशेषणविधिलभ्यमत्वर्थलक्षणयैव वाच्यः, ततो वरं नामत्वमित्युक्तम्। अतो न कोऽपि दोषः।

यत्तु राणके विशिष्टस्य भिन्नत्वात् विशेषणविधिवद् विशेष्यविधिरपि कल्प्यत इत्युक्तम्। तत्र निर्विकल्पो विशिष्टविधिः कीदृशः? विशेषस्य च प्रधानस्य कथमाक्षेपः? इति चिन्त्यम्। एतेन 'व्रीहिभिर्यजेत' इत्यत्रापि विनियोगविधौ

---

१. सूक्तवाकेन प्रस्तरं प्रहरति' 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति वाक्येष्विदयर्थः।

मत्वर्थलक्षणा व्याख्याता। तत्रापि हि नवमाद्यन्यायेन यद्यागेन फलं कुर्यात् व्रीहिकरणकेन इत्यपूर्वसाधनत्वांश एव व्रीहयः साधनं भवति, न तु व्रीहिभिर्यागमिति। यागस्वरूपमात्रे वैयर्थ्यात्। तत्र च सविशेषणे होति न्यायेन व्रीहिकरणकत्वविधिः। तदुक्तं वार्तिके—

विधाने वाऽनुवादे वा यागः करणमिष्यते।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति॥ इति।

अनुवादोऽपि यद् यागेन कुर्यादित्येवंरूप एव वाच्य इति न्यायसुधाऽपि। तत्त्वन्तु व्रीहिभिरिति करणत्वं कथं करणीभूते यागेऽन्वेतु। द्वयोः करणयोरन्वयायोगात्। अतो विशेषणविधौ सोमेन यागमितिवत् व्रीहिभिर्यागमित्येवं युक्तम्। न चायं विशिष्टविधिः येनार्थे साध्यत्वे व्रीहिकरणत्वं यज्येत। वार्तिकन्तु प्रौढिमात्रमित्याहुः।

यद्यपि वार्तिके—

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते॥ इति।

विधेस्त्रैविध्यमुक्तम्। तत्रोत्पत्तिप्रयोगाधिकारविषयोऽपूर्वविधेर्भेदाः। नियमपरिसङ्ख्ये विनियोगविधेः। अस्य ह्ययमर्थः–'व्रीहीन् प्रोक्षति' इति वाक्यं विना यागीयव्रीहिषु प्रोक्षणं कथमपि न प्राप्नोतीत्यप्राप्तविषयोऽपूर्वविधिः। न च 'अग्नये जुष्टं प्रोक्षामि' इति मन्त्रलिङ्गात्प्राप्तिः,लिङ्गस्याविधायकत्वात्। प्रत्यक्षावधातविधौ सति कल्पनाविरोधात्। सूक्तवाकवत् श्रुत्यभावादन्योन्याश्रयाच्च। 'व्रीहीनवहन्ति' इति विध्यभावे यागीयव्रीहिषु अवधातोऽर्थतः प्राप्त एव। किन्त्वर्थान्नखविदलनमपि पक्षे प्राप्नोतीत्यप्राप्तांशपूरणं नियमो विधीयते। यदा ह्यवघातः पुरुषेच्छया प्राप्तः तदा प्राप्तिर्न विधेः फलम्, अन्यतस्सिद्धेः। तेन यद्यपि तत्पक्षे विधेः प्रवृत्तिरस्त्येव, अन्यथा वैधत्वायोगात्, तथापि फलतो वैयर्थ्यञ्च। प्राप्तिपक्षे तत्प्राप्तिरेव फलम्। स एव नियमः। तथा चयनेऽश्वगर्दभयोर्द्वयो रशने। तत्र 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते'इति परिसङ्ख्या। एतदभावे हि लिङ्गाविशेषात् रशनाद्वये मन्त्रोऽनियमात्प्राप्नोतीति तत्रान्यत्र वाऽनेकत्र शेषिणि प्राप्तौ गर्दभरशनातो व्यावृत्त्यर्थोऽयं विधिः। यद्यपि नियमेऽर्थाक्षेपात्पूर्वं प्रत्यक्षशास्त्रं 'व्रीहीनवहन्ति' इति शीघ्रं प्रवृत्तम्। तेनैवोपायेनावधातेन नैराकाङ्क्ष्यान्नान्याक्षेपः, परिसङ्ख्यायाञ्च लिङ्गविनियोगात्पूर्वं प्रत्यक्षशास्त्रेणाश्वरशनायां मन्त्रस्य शीघ्रं विनियोगेन नैराकाङ्क्ष्यान्न रशनाद्वये लिङ्गाद्विनियोगः। तेनाप्राप्तविषयत्वादपूर्वविधितो न भेदः, तथाप्यवधातशास्त्राभात्रेऽर्थाक्षेपान्नखविदलनस्य प्राप्त्यावघातः पक्षे प्राप्नुयात्। परिसङ्ख्याशास्त्राभावे च मन्त्रो लिङ्गाविशेषात् गर्दभरशनायामपि स्यात्। तयोः प्रवृत्तौ त्वाक्षेपः मन्त्रलिङ्गप्रतिबन्धादवघातस्याप्राप्तपक्षपूरणं नियमो गर्दभरशनायां मन्त्रवर्जनमर्थतः फलमिति फलतो नियमविधिः परिसङ्ख्याविधिश्चोच्यते। शब्दतो नियमस्तु 'सत्यमेव वदितव्यम्'

इत्येवकार एव। पशौ 'जाघन्या पत्नीस्संयाजयन्ति' इति च प्राकृताङ्गानां पूर्वप्रवृत्तेः, 'औदुम्बरो यूपो भवति' इत्यादिवैकृतद्रव्यविधिस्त्वपूर्वविधिरेव। एतदभावे हि प्रकृतितोऽनुवाद्यो यूपः, खादिरत्वादिस्तत एव प्राप्त इति नौदुम्बरत्वस्य पक्षेऽपि प्राप्तिः। यत्तु विधिरसायने सर्वे द्रव्यविधयो नियमा एवेति प्रतिज्ञाय दूषणमुक्तम्—तन्न; यागीयद्रव्यविधयो हि तथा, न तु सर्वः। न हि प्रयाजे कृष्णलादिविधयोऽपि तथा। तेनैतेऽपूर्वविधय एव। शब्दतः परिसङ्ख्या च निषेधे पर्युदासे वा नञादिभिर्वर्जनोक्तेरिति राणकः। तथापि तत्र निषेधपर्युदासशब्दाव्याहारसिद्धेर्न परिसङ्ख्याशब्दः। यत्र तु विधेः फलं वर्जनं तत्रैव सा।

सा परिसङ्ख्या द्विधा—शाब्दी आर्थी चेति। आद्या निषेधादिति राणकः। **'अत्र** ह्येवावपन्ति' 'अत एवोद्वपन्ति' इत्येवकारेण परिसङ्ख्योक्तेति तन्त्ररत्ने। तन्न; 'सत्यमेव वदितव्यम्' इतिवन्नियमोक्तेरन्ययोगव्यवच्छेदार्थत्वेऽपि अत्रेति गायत्र्यादिपरत्वात् प्रकरणात् पवमानपरत्वं चावधातस्य क्रत्वर्थव्रीहिपरत्ववत् परिसङ्ख्याभावात्। **तेनेदं चिन्त्यमित्युक्तमस्माभिः वादतत्त्वकमलाकरे**।

अन्त्या द्विधा प्राप्ते परिसङ्ख्याऽप्राप्ते च। आद्या गृहमेधीये[1]पञ्चमे पूर्वपक्षे। भाष्यमते च 'पञ्च-पञ्चनखा भक्ष्याः' इति। इयं शेषपरिसङ्ख्या। अन्त्या तु 'द्वे आहवनीये' इति। अत्र हि 'यदाहवनीये जुहोति' इति सामान्येन विशेषलक्षणयाऽऽहवनीयः प्राप्तोऽप्यन्यः परिसङ्ख्यायत इत्युक्तमस्माभिः **समाख्याधिकरणे**। यथा वा 'इमामगृभ्णन्' इति। इयं पूर्ववत् शेषिपरसङ्ख्या। वार्तिके हि तत्रान्यत्र च शेषिणि शेषस्य प्राप्तौ, तस्मिन्नन्यस्मिंश्च शेषे प्राप्ते इति द्वेधा उक्तो राणके। **विशेषो मत्कृतवार्तिकटीकायां** ज्ञेयः। यद्यपि नियमे नखविदलनादेः परिसङ्ख्यया गर्दभरज्जोश्च निवृत्तिस्तुल्या, तथापि नियमस्याप्राप्तपक्षप्रापणस्य प्राथम्याद्विधेयगतत्वाच्च स एव फलम्, अन्यनिवृत्तिस्तु चरमोपस्थितेरविधेयगतत्वाच्च न फलम्। परिसङ्ख्यायां द्वयोरपि रज्वोर्मन्त्रस्य लिङ्गान्नित्यप्राप्तेर्न प्राप्तिर्नियमो वा फलम्, किन्त्वन्यनिवृत्तिरेव। 'पञ्च पञ्चनखा भक्ष्याः' इति नियमविधिरेवेति व्याकरणाधिकरणे वार्तिके उक्तम्। अत्र रागप्राप्ते भक्षणे विध्यभावात् पञ्चत्वस्य च 'शशकःशल्लको गोधा सेधा कूर्मश्च पञ्चमः' इति पाठतः सिद्धे भक्षणं प्राङ्मुख एव कुर्यात् इतिवत् शशादिभिरेव कुर्यादिति नियमः। अन्ये तु दाशमिकभाष्यानुसारेणात्र परिसङ्ख्यामाहुः। **विज्ञानेश्वरोऽप्येवम्**। **अत्राप्पय्यदीक्षिता** विधिरसायने दूषणमाहुः। अपूर्वविधिलक्षणं तावदयुक्तम्-

---

१. गृहमेधीये श्रुतस्य 'आज्यभागौ यजति' इत्यत्राष्टौ पक्षाः। प्राकृताज्यभागयोरनुवादोऽयम्, ऐष्टिकविध्यन्तप्राप्तौ लिङ्गमिदम्, अर्थवादोऽयम्, कर्मान्तरमिदम्, आज्यभागातिरिक्तस्य प्रयाजादेः परिसङ्ख्यापरमिदम्, आनुमानिकचोदकस्याज्यभागातिरिक्ते सङ्कोचकमिदम्, चोदकोपसंहारार्थमिदम्, गृहमेधीयेष्टेरपूर्वकर्मत्वबोधकमित्यष्टौ पक्षाः। तेषु पञ्चमः पक्षः परिसङ्ख्यापरः।

विधिविषये अत्यन्तमप्राप्ते तत्प्राप्तिफलको विधिरिति विषयसप्तमी सतिसप्तमी वा। आद्ये विधिविषयस्य सर्वथाऽप्राप्तिः उद्देश्यसम्बन्धित्वेन वा? नाद्यः 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' 'यावज्जीवमग्निहोत्रं जुहोति' 'चित्रया यजेत पशुकामः' इति क्रतुनिमित्तादिसम्बन्धार्थेषु चाव्याप्तेः। तेषां 'य एवं विद्वानग्निं चिनुते' 'अग्निहोत्रं जुहोति' 'दधि मधु घृतं धानाः' इत्याद्यैः स्वरूपस्य प्राप्तेः। क्रतुसम्बन्धार्थेषु 'अक्षैर्दीव्यति' इत्यादिषु चाव्याप्तिः, लोकतस्तेषां प्राप्तेः। नान्त्यः; 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण' इति वैकृतविधिष्वव्याप्तेः। तथाहि 'अग्निं चिनुते' इति चयनसंस्कृते स्थण्डिलेऽग्निं स्थापयेदित्यर्थः। तत्र प्रकृतावुत्तरवेदिसत्त्वेऽपि न तथाऽग्नेः पाञ्चदश्येनानारभ्याधीतसाप्तदश्यवद्बाधः। तत्र सामिधेनीद्वारा क्रतुसम्बन्धस्य कल्प्यत्वादत्र चाग्निष्टोमशब्दोक्तक्रतुसम्बन्धादग्नेर्वैयर्थ्याभावात् प्राकरणिकोत्तरवेदेर्दुर्बलत्वादङ्गत्वाकल्पनात्। तस्मादस्ति प्राकृतोऽग्निः। तथा अतिग्राह्या नाम ग्रहा 'उपस्तम्भनं वा एतद्यज्ञस्य येऽतिग्राह्याः' इति प्रकृतावुक्ताः। विकृतावपि 'उक्थ्ये गृह्णीयात् विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय' इति विहिताः। तेषां विकृतौ श्रवणं 'श्येनचितं चिन्वीत स्वर्गकामः' इत्यादि तदाश्रितगुणकामप्राप्त्यर्थम्, फलार्थगुणानां ह्यङ्गत्वाभावान्नातिदेश इत्युक्तमष्टमे। प्रकृतौ विकृतौ च सामानविध्ये तु प्रकृताविव विकृतावपि फलार्थगुणाः प्राप्यन्ते। न च प्राकृतोत्तरवेदिविकल्पनिवृत्त्यर्थो विकृतावग्निनियमः, पशौ पत्नीसंयाजे जाघनीविधिवदिति वाच्यम्, अनारभ्याधीतोऽह्यग्नेः विकृतिसम्बन्धः न विकृतिप्रकरणे तत्र न विकृतौ चोदकप्राप्त्योत्तरवेदेः पक्षप्राप्त्यपेक्षोऽग्निनियमः। तत्तद्विकृतिचोदकानामसन्निधेः। अग्न्याश्रितगुणकामानाञ्च सन्निहितत्वात्। यद्यपि 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति सर्वद्विरात्राणामतिरात्रे द्वितीयेऽह्नि षोडशिग्रहस्य पुनर्विधिश्चोदकप्राप्तविकल्पनिवृत्त्या नियमार्थो दृष्टः तथाप्यगत्या तत्र तथा। न त्वत्र गुणकामप्राप्तिसम्भवे तद्युक्तम्। एतेन विकृतावङ्गान्तरनिवृत्त्यर्थो विकृत्यन्तरनिवृत्त्यर्थो वाऽग्निविधिरिति परास्तम्। तेषामसन्निधौ तन्निवृत्त्ययोगात्। प्रकृतिसमानविधानस्य वैकृताग्नेः पूर्वमप्रवृत्त्या चोदकप्राप्त्यभावाच्च। गृहमेधीयपञ्चमपक्षवत्प्राप्ताङ्गान्तरपरिसङ्ख्यायां त्रैदोष्याच्च। नापि तदष्टमपक्षवच्चोदकलोपः। तत्राज्यभागयोः क्लृप्तोपकारकयोश्चोदकात्प्राप्तिसम्भवे पुनःश्रवणं तेनैव यागस्य नैराकाङ्क्ष्याच्चोदकलोपादपूर्वतापरम्। न चेह प्रकृतावग्नेरुपकारः क्लृप्तः, वैकृताग्निविधिकालीनत्वात्। अतः प्रकृतौ विकृतौ वाऽग्नेर्विकल्पेऽपि तद्विधेर्गुणकामप्राप्तिरेव फलमित्युक्तं दशमे। तेनोद्देश्यविकृतिसम्बन्धित्वेन प्राप्ताग्निविषयत्वात्कथमप्राप्तिरिति। न च सतिसप्तमीपक्षो युक्तः। तत्रापि प्रकृतविध्यपेक्षायामेतत्प्राप्तिफलकत्वं विवक्षितं न वा? आद्ये त्र्यनीकायामाद्ययोरह्नोरव्याप्तिः। तथाहि-द्वादशाहे आद्यन्तयोर्दशमे चाह्नि ऐन्द्रवायवाग्रत्वमुक्त्वा नवसु अहस्सु त्र्यनीकोक्ता ऐन्द्रवायवाग्रं प्रथममहः-अथ शुक्राग्रमथाग्रयणाग्रमेवं द्विः। अत्राद्येऽहनी रथन्तरबृहत्सामनी इति निर्देशादेव तयोरैन्द्र-

वायवशुक्राग्रतयोस्सिद्धेः पुनर्वचनमनैमिकत्वार्थम् । तत्फलन्तु विकृतौ गर्गत्रिरात्रे द्वितीयेऽह्नि वामदेव्यसत्त्वात् बृहत्सामाभावेऽपि अतिदेशाच्छुक्राग्रत्वम् । तेन प्रकृतविध्युद्देश्ये द्वादशाहिकाहर्द्वये प्राप्त एवेयमग्रताविध्योः प्रवृत्तिरित्यव्याप्तिरिति । **तत्तुच्छम्** । आद्ये वैकृताग्निविधेर्गुणकामप्राप्तिरुद्देश्या । विकृतिसम्बन्धित्वेन चोदकादप्राप्तेः । प्राकृतविधेस्तत्समकालत्वेन पूर्वमप्रवृत्तेः विकृतिसम्बन्धित्वेनाप्राप्तगुणकामप्राप्तिफलत्वेन चाप्राप्तविषयत्वाक्षतेः । अप्राप्तविषयो ह्यपूर्वविधिः । सा चाप्राप्तिरग्निहोत्रं जुहोतीत्यादौ क्वचित्स्वरूपस्य क्वचिच्च व्रीहिप्रोक्षणवैकृताग्निविध्यादावुद्देश्यसम्बन्धित्वेनेति द्वयोरनुगमः । उत्पत्तिविनियोगविध्यादयो ह्यपूर्वविधेरेव भेदाः । अन्ये 'पूर्वोक्तास्सप्तिसप्तमोपक्षादयस्तु वागाडम्बरमात्रेणाज्ञसम्मोहनार्थमुपन्यस्ताः । एवं नियमेऽपि द्वयोरनुगमः– स्वरूपस्य पक्षप्राप्तौ उद्देश्यसम्बन्धस्य वा पक्षप्राप्ताविति । न द्वितीयपक्षः । आद्ये त्र्यनीकायां आद्ययोः प्रत्यक्षविधेश्चोदकाच्छीघ्रं प्रवृत्त्या उद्देश्यसम्बन्धित्वेन प्रागप्राप्तेः । अनैमित्तिकत्वन्तु फलं न विध्यर्थः । न चात्र चोदकप्राथम्यम्, विधेयसाम्यात् । तत्र गृहमेधीयवत् प्राकृताङ्गपुनःश्रुत्या पूर्ववत्प्राप्ते विकृतौ निमित्ताश्रवणात् अनैमित्तिकत्वं सिद्ध्यति न त्वपूर्वत्वम् । यच्च **विधिरसायने** उक्तम्–'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ, सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्याभ्यां स्वर्गसम्बन्धस्याङ्गसम्बन्धस्य च सिद्धेस्तत्प्राप्तिफलके 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्राव्याप्तिरिति, तन्न; ज्योतिष्टोमपदस्य यागसामानाधिकरण्यात् सामान्येन यागनामत्वे सिद्धे 'त्रिवृत्पञ्चदशः' 'ग्रहं वा गृहीत्वा' इति वाक्याभ्यां तत्प्रख्यतया स्तोत्रसम्बन्धात् स्वर्गवाक्ये सोमयागविशेषनामत्वे सिद्धे तदुपजीविनस्सर्वेभ्य इत्यस्य भावनाभावात्स्वर्गेतरफलपरतया तेन स्वर्गार्थत्वासिद्धेः । न हि स्वर्गवाक्यं विना ज्योतिष्टोमपदस्य नामत्वं सिद्धम् । यज्यश्रवणेऽर्थाज्ञानात् । न चाख्यातम्, येन विधिस्स्यात् । अतः फलतो वैयर्थ्ये बुद्धे एव स्वर्गसम्बन्धाप्राप्तिरस्त्येवेति नाव्याप्तिः । तत्त्वन्तु स्वर्गकामवाक्यालोचनया स्वर्गपदमुपलक्षणम् । स्वर्गादिसर्वकामो यजेतेत्येकैव भावना ताभ्यां विधेया, आख्याताभावादुपलक्ष्यानपायाच्चेति **वयं प्रतीमः** । न चोत्पत्तिशिष्टस्वर्गफलावरुद्धे फलान्तरायोगाद्भावनाभेदः, 'संनिधौ त्वविभागात्' इति न्यायाच्छब्दान्तराद्यभावाच्च भावनाभेदाभावात् ।

यच्चोक्तम् नानाशाखास्थाग्निहोत्रादीनामङ्गानामिव प्राप्तिः शाखान्तरे स्यादेव । अतः प्राप्तस्यैव विधानात्तत्राव्याप्तिरिति तत्तुच्छम्; अङ्गानां हि [ सर्वप्रयोग ? ] सर्वप्रधानविधितस्तु शाखान्तरीयविधिविधेयत्वात्प्राप्तिः, प्रधानाभेदेऽपि तद्विधिनैवाङ्गविधानात् । न ह्यङ्गविधिर्विधायकः, प्रयोगविधिप्राप्तानुवादत्वात् । प्रधानविधिस्तु शाखान्तरीयः नान्यशाखीयस्य प्रवर्तकः । अध्ययनविधावुपादेयस्याप्राप्तस्यैव विधिः । स्वशाखीयविध्यभावे तु परशाखीय-

मप्यनुष्ठेयम् प्रवर्त्यभेदाभावात्। अतो नाव्याप्तिः। एवमुद्देश्यसम्बन्धित्वेन पक्षप्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः। नियतप्राप्तस्यान्यव्यावृत्त्यर्थं पुनः-श्रवणं परिसङ्ख्या। यथा 'द्विर्हविषोऽवद्यति'इति। 'चतुरवत्तं जुहोति'इति हविषश्चतुरवदानं प्राप्तं द्विरिति परिसङ्ख्यायते। यत्र तु नियमानुनिष्पादिनी परिसङ्ख्या तदनुनिष्पादी वा नियमः द्विसङ्करः त्रिसङ्करो वा **विधिरसायने** उक्तः। द्विसङ्करो यथा 'उपांशु पौर्णमास्यां यजन्' इत्यत्राप्राप्तफलसम्बन्धार्थ-त्वादपूर्वविधिः। अन्तराले दर्शेऽपि प्राप्ते तन्निवृत्त्या परिसङ्ख्या च। 'सायं जुहोति, 'प्रातर्जुहोति' इत्यत्र स्वर्गार्थाग्निहोत्रे कालनियमः। नित्ये च यावज्जीव-काले सततं प्राप्तेः सायं प्रातः कालीनं जीवनं निमित्तं विशिषन् अन्यकाल-निवर्तकश्च। तथोपहव्ये 'अश्वः श्यावो दक्षिणा' इति। ज्योतिष्टोमात् 'गौश्चाश्वश्च'इति गवाश्वसमुच्चये प्राप्ते गवादेर्निवृत्त्यर्थः श्यामरूपनियमार्थश्च। तथा 'यद्योन्यां तदुत्तरयोर्गायति' इत्यत्रापूर्वनियमौ। 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनात् तृचे गानं दशमे सिद्धम्। तच्च संशरविलेशाभावाय समच्छन्दस्कास्वेवेत्युक्तम् नवमे 'तदभ्यासस्समासु इत्यत्र। तच्च गानं न योन्यु-क्तयोः किन्तूत्तराग्रन्थाधीतयोस्तत्रैव रूढेरिति चोक्तं नवमे। तत्र रथन्तरादावु-त्तरे विषमे, संशरविलेशाभावाय समयोरेव प्राप्तेर्विषमयोरपूर्वविधिः। वाम-देव्यमुत्तरयोस्समयोरनियतप्राप्तौ नियम इति। त्रिकसङ्करो यथा—'सृष्टीरुपद-धाति' इत्यत्र नोपधानस्येष्टकानां वा विधिः। चयनविधिना 'इष्टकाभिरग्निं चिनुते' इत्यतो वा सिद्धेः। न च समुदितोपधानं मा भूदिति प्रतिप्रधानमावृत्त्यर्थं इष्टकाङ्गत्वेनोपधानविधिः, 'सृष्टीः प्राणभृत' इति नानोपाधानविधिवैयर्थ्यात्। न चान्यत्र गुणार्थो विधिः, विनिगमनाविरहात्। न च वचनात्, मध्यमचि-तिसम्बन्धार्थं विधिः, सृष्टिमन्त्रोपधेयेष्टकाविशेषाज्ञानात्। तत्रोपधानाङ्गत्वेन प्रकरणात् प्राप्तावपि ग्रहणासादनादिपरिसङ्ख्या, समुदायविधौ प्राप्ते सति मन्त्रैः प्रत्येकोपधाननियमार्थो मध्यमचितिसम्बन्धेऽपूर्वविधिश्चेति।

**इति कमलाकरभट्टकृतौ विधिवादः**

## वाक्यार्थस्वरूपम्

एवं प्रकृत्यर्थे प्रत्ययार्थे चोक्ते पदजन्यपदार्थज्ञानात् तत्संसर्गो वाक्यार्थः। स च संसर्गमर्यादया भासत इति तार्किकाः। विशेष्यत्वाद्यभाने नियतभाने न संस-र्गमर्यादेति कुलधर्मः। तत्र संसर्गे शब्दवृत्त्यभावे शाब्दत्वायोगात्। न च शब्दता-त्पर्यविषयत्वाच्छाब्दत्वम्, पिधेहीत्यत्र द्वारस्य गङ्गापदात्तीरस्य च तात्पर्येण बोधे शब्दाध्याहारलक्षणाद्युच्छेदापत्तेः। **तात्पर्यं हि लक्षणाहेतुर्न वृत्तिः**। एतेन संस-र्गांशे कुब्जाशक्तिरिति परास्तम्। वाक्यस्य पदत्वापत्तेः। अतस्संसर्गे लक्षणैव। सा च जातपुत्रः कृष्णकेश इतिवद् वाक्येऽपि साध्वी। न च वाक्ये पदत्वापत्तिः, सुप्तिङन्तत्वाभावादित्यन्ये। तत्त्वन्तु बहुपदे वाक्ये संसर्गाणां भेदान्न वाक्यार्थः, किन्तु तिङन्तविशेष्यपदार्थ एव वाक्यार्थः 'देवस्य त्वा' इत्यादौ निर्वापादिरानयना

दिश्च। तत्र लक्षणैव वृत्तिः। गामित्याद्यैर्गोकर्मकम्, दण्डकरणकं इत्यानयनं लक्ष्यते। तदुक्तं वार्तिके—

'भावनैव च वाक्यार्थःस्वकारकविशेषिता'इति।

अमरकोशेऽप्युक्तम्—

'तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता'इति।

विशेष्यपदात्तद्बोधेऽपि विशेष्योपस्थित्यर्थं लक्षणा। तदुक्तम् 'अर्थैकत्वादेकं वाक्यम्'इति। एकप्रयोजनं विभागे साकाङ्क्षञ्चैकं वाक्यमित्यर्थः। 'भगो वां विभजतु पूषा वां विभजतु' इत्यत्रार्थैक्येऽपि नैकवाक्यता, विभागे निराकाङ्क्षत्वात्। 'स्योनं ते सदनं करोमि तस्मिन् सीद' इति तच्छब्देन पूर्वपरामर्शात् विभागे साकाङ्क्षत्वेऽपि सदनप्रतिष्ठापनरूपार्थभेदान्नैकवाक्यत्वम्। विशेषो वार्तिके मत्कृतदीपिकायाञ्च ज्ञयः।

यदपि धर्मे प्रमाणं विध्यर्थवादमन्त्रादि यच्च शेषत्वे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपम्, यच्च श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्यादि, यच्चातिदेशादि, यच्च स्मृत्याचारादि तत् शब्द एवान्तर्भूतं न मानान्तरम्। श्रुत्यादेः शेषसम्बन्धबोधकपदार्थान्तरान्वयात्।

इति रा(म)कृष्णभट्टात्मज-कमलाकरभट्टकृते मीमांसाकुतूहले शब्दपरिच्छेदः।

## प्रामाण्यवादः

सर्वञ्च ज्ञानं स्वतःप्रमाणम्। विषयस्य याथार्थ्यमेव प्रामाण्यम्। यया सामग्र्या ज्ञानमुत्पद्यते गृह्यते च तयैव प्रामाण्यमपि। कारणगुणसंवादार्थक्रियाज्ञानैः परतः प्रमाण्ये तस्यापि परतस्तस्यापीत्यनवस्था क्वापि प्रामाण्यं प्रवृत्तिश्च न स्यात्। न च प्रामाण्यग्रहो न प्रवृत्तिहेतुरिति वाच्यम्, शत्रुचोरादिवाक्यात्प्रवृत्त्यापत्तेः। न च तत्राप्रामाण्यग्रहः प्रतिबन्धकः संशये प्रवृत्त्यनापत्तेः; अप्रामाण्यग्रहस्याविशेषात्। प्रतियोगिप्रामाण्यज्ञानस्य[1]अज्ञानापेक्षया प्रतिबन्धकापेक्षया लघुत्वाच्च। तदुक्तम्—

आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता।

अर्थस्य च तथाभावः प्रामाण्यमभिधीयते इति।

अत्र चैकः प्राह--आत्मपरिणामे ज्ञाने विषयसंवेदनशक्तिः प्रभवति। तया ज्ञानमनुमीयते। 'घटमहं जानामि' इति ज्ञानस्याभिलापमात्रम्, न तु ज्ञानान्तरमनुव्यवसायोऽस्तीति। वेदान्तिनोऽप्येवमाहुः।

एवं प्रमाणजन्यो यथार्थानुभव उक्तः। अयथार्थस्तु त्रेधा संशयस्तर्को विपर्ययश्चेति। एकत्र भासमाने विरोधेऽनेककोटिकं ज्ञानं संशयः। यथा स्थाणुर्वा

1. अप्रामाण्यज्ञानस्य प्रवृत्तिं प्रति प्रतिबन्धकत्वं प्रकल्प्य अप्रामाण्यज्ञानाभावस्य हेतुत्वकल्पनापेक्षया अप्रामाण्यज्ञानप्रतियोगिभूतप्रामाण्यज्ञानस्यैव हेतुत्वकल्पने लाघवमिति भावः।

पुरुषो वेति। स च निश्चयविरोधी। एकमात्रकोटिकं ज्ञानं निश्चयः। व्याप्यारोपे व्यापकारोपस्तर्कः। यथा वन्ह्यभावस्य व्याप्यस्यारोपे धूमाभावस्य व्यापकस्यारोपः। स च प्रतियोगिनि धूमे सति न सम्भवतीच्छाजन्यत्वादाहार्यः। विशेष्यावृत्तिप्रकारकं ज्ञानं विपर्ययः। स एव भ्रमः। यथा शुक्ताविदं रजतमिति। अत एवान्यथाख्यातिरुक्ता वार्तिके। तथाहि–न तावच्छुक्तौ रजतभ्रमे वेदान्तिवत् सदसद्विलक्षणस्यानिर्वचनोयस्य रजतस्योत्पत्तिः; उत्पादनाशयोर्हेत्वभावात्। न प्रातिभासिकस्य; ज्ञानसंस्कारादेरर्थाहेतुत्वात्। न च शुक्त्यज्ञानं हेतुः, तस्य भावरूपत्वे तज्जरजतस्य घटवत्सत्यत्वापत्तेः। भावोपादानस्य भावस्य सत्यत्वात्। न च सत्योपादानस्यैव सत्यत्वम् न तु भावोपादानस्येति वाच्यम्, परमते सिद्धे प्रपञ्चस्य सत्यब्रह्योपादानत्वेऽपि सत्यत्वाभावात्। अभावत्वे चोपादानत्वायोगात्। न च स्मृत्यनुभवात्मकं ज्ञानद्वयमिति प्राभाकरोक्ता ख्यातिः, विशिष्टैकधर्मायोगात्। पुरो रजतं साक्षात्करोमीत्यनुभवादन्यविषयादन्यत्र प्रवृत्त्ययोगाच्च। न चेष्टभेदाग्रहात्प्रवृतिः, इष्टग्रहस्यैव हेतुत्वेन तस्याकिञ्चित्करत्वात्। नापि ज्ञानाभावः ख्यातिरिति शून्यवादः। प्रतातिविरोधात् नानाविधहर्षादिकार्यायोगाच्च। नापि बौद्धोक्ताऽसत्ख्यातिः, असतस्सन्निकर्षाद्ययोगेऽपरोक्षज्ञानायोगात्। नापि तत्रैव सदिति दिगम्बरमतं युक्तम्, त्रैकालिकबाधायोगात्। तेन शुक्तौ रजतज्ञानं शुक्तिविषयं शुक्तौ प्रवर्तकज्ञानत्वात् शुक्तिज्ञानवदित्येकं विशिष्टज्ञानं सिद्धम्। तत्र रजतांशे अन्यत्र ज्ञानस्य रजतस्य स्मृत्योपनीतस्य भानमित्यन्यथाख्यातिः।

ननु रजतांशे चक्षुस्सन्निकर्षाभादे कथमपरोक्षत्वम्? अत्र तार्किकाः—रजतांशे ज्ञानलक्षणाऽलौकिकप्रत्यासत्त्येन्द्रियसन्निकृष्टं रजतं भासते सुरभिचन्दनवदित्याहुः। तन्न; किमिदं ज्ञानं परोक्षमपरोक्षं वा? नाद्यः, पुरो रजतं साक्षात्करोमीत्यनुभवात्। नान्त्यः, न हि मानसं तत्, बाह्येन्द्रियानुविधानात्। त[था न चक्षुरादी]न्द्रियजन्यम्, तत्सन्निकर्षाजन्यत्वादनुमितिवत्। विपक्षे सन्निकर्षं विनेन्द्रियस्य कार्याजनकत्वं बाधकम्। न च विशेष्य एव सन्निकर्षापेक्षा न विशेषण इति वाच्यम् वैपरीत्यापत्तेः। उष्णोषच्छन्नकुण्डले विशिष्टप्रमाभावाच्च। किन्तु यावद्विषयसन्निकर्षः कारणम्। अन्यथैकसंयोगेऽनेकगोचरसमूहालम्बनापत्तेः। तत्र विशेषणसंनिकर्षस्याहेतुत्वे ज्ञानलक्षणाङ्गीकारे वा पर्वते वन्हिप्रत्यक्षापत्तेः, अनुमानोच्छेदापत्तिः। अप्रसिद्ध-साध्यकानुमानस्य ना सत्त्वात्[1]। अनुमिनोमीति प्रतोतेश्च प्रमिनोमीतिवत्। अनुमितिविषयकानु[व्यवसायरूप]त्वात्। सुरभिचन्दनमित्यत्रानुमानेन प्रतीतिसम्भवाच्च। न च परामर्शानुव्यवसायदर्शनादनुमितिसामग्रीप्राबल्यादनुमितिर्वाच्या। संशयोत्तरं विशेषदर्शने परामर्शे सत्यपि प्रत्यक्षोत्पत्तेः समाने विषये प्रत्यक्षसामग्र्या बलवत्वात्। न च तत्र पक्षताभावान्नानुमितिः, साधकमानाभावस्योभयत्राभावेन

१. सत्त्वात् इति सत्त्वापत्तेरित्यर्थकम्।

पक्षताभावसाम्यात्, सिद्धेस्सत्त्वाच्च। न चानुमित्सया तत्रानुमितिः, तदभावेऽप्यनुमितिसत्त्वात्। न च ज्ञानसंस्कारो वा प्रत्यासत्तिः, रजतस्येन्द्रियसंयोगाभावे प्रत्यक्षत्वायोगात्। न ह्यतीते दण्डे दण्डचयमासीदित्यनुभवेऽपि दण्डं पश्यामि साक्षात्करोमीति वा कुत्रानुभवोऽस्ति? पर्वते वह्निप्रत्यक्षापत्तेश्च। न चालौकिकज्ञानलक्षणातोऽनुमितिसामग्र्या लौकिकत्वात्प्रबलत्वम्। संशयोत्तरं भ्रमरूपविशेषदर्शने भ्रमप्रत्यक्षायोगात्। भ्रमरूपविशेषदर्शनोत्तरं पुरुषभ्रमवत् भ्रमरूपपरामर्शाच्चाक्षुषवह्निभ्रमापत्तेश्च। न च प्रमानुमितिसामग्र्यसमवहितं ज्ञानं प्रत्यासत्तिः, संशयोत्तरं सुरभिचन्दनमिति प्रत्यक्षे च प्रमानुमितिसामग्रीकालीनस्यैव ज्ञानस्य प्रत्यासत्त्यङ्गीकारात्, भ्रमानुमित्युच्छेदप्रसङ्गाच्च।

किञ्च–यत्र यदनुभूतं यज्ज्ञानं तत्र प्रत्यासत्तिः। न च शुक्तौ रजतं प्रागनुभूतम् येन तत्स्मृतिः स्यात्। न ह्यदृष्टदण्डे चैत्रे दण्डचयमिति धीः। किञ्च रजतज्ञानं शुक्तिविषयं न वा? नाद्यः; अन्याकारस्यान्यालम्बनत्वायोगात्। नान्त्यः; ज्ञानविषयस्य रजतस्यान्यत्र सत्त्वेन देशान्तरे प्रवृत्त्यापत्त्या शुक्तौ प्रवृत्त्ययोगात्। न चैकज्ञानविषयत्वात्प्रवृत्तिः, रजतघटसमूहालम्बनाद्रजतार्थिनो घटे प्रवृत्त्यापत्तेः। न च शुक्तौ रजतत्ववैशिष्टयं ज्ञानगोचर इति नोक्तदोष इति वाच्यम्, रजताभेदो ह्यत्र विषयः न रजतत्वसंसर्गः। रजतस्मृतौ विशेषणस्य रजतत्वस्यान्यथासिद्धत्वेनारोपायोगात्। न च युगपद्विशेषणविशेष्यभावो विरोधात्। अन्यथेह घटाभाव इत्यत्राविशेषेण घटत्वारोपस्स्यान्न संसर्गाभाव धीः। न चेच्छया नियमः, अभावदेशे घटाज्ञानेन तदिच्छायोगात्। न च रजतत्ववैशिष्टयं पुरोऽनुभूतम् यस्य स्मृतिस्स्यात्। न च सम्बन्धस्य संसर्ग-मर्यादया भानान्न प्रत्यासत्त्यपेक्षा। असतो भानायोगाच्चाक्षुषत्वासम्भवाच्च। न च दोषात्तद्भानम्, असतो भानायोगात् रजतेऽपि तथात्वापत्तेश्च। किञ्च न रजतत्वस्य स्मृतिः निर्विकल्पकस्मृत्ययोगात्। तत्र च रजतमेव प्रकारः, तेन स्मृतेस्समानप्रकारकत्वेन हेतुत्वे रजतमेव स्मृतौ प्रकार इति तस्यैवारोपापत्तिः, तत्ताभानप्रसङ्गाच्च। न च दोषात्तदभानम्, तदंशे यथार्थत्वेन दोषाजन्यत्वात्। न च रजताभेदबोधाच्छुक्तौ प्रवृत्तिः। अभेदः किं भेदाभावो वा? रजतस्वरूपं वा? भेदप्रतीत्यभावो वा? नाद्यः; इदं रजतमित्यनुभवस्य भेदाभावाविषयत्वात्। न हि द्वितीयः; रजतस्वरूपस्य देशान्तरे सत्त्वेन तज्ज्ञानात्तत्रैव प्रवृत्त्यापत्तेः। न तृतीयः, सूर्योदयेन प्राच्याः प्रतीचीभेदग्रहेऽपि प्रतीच्याः शुक्तावाप्तवचनेन पुरो रकतभेदग्रहेऽपि रजतस्य च भ्रमप्रवृत्त्योर्दर्शनात्। न च ज्ञाने रजतांशे इदमंशे वा दोषो हेतुः, यथार्थत्वात्। न च ज्ञाने दोषं विना व्यधिकरणप्रकारकत्वं भ्रमत्वं नेति वाच्यम्। इदन्ताज्ञाने तथापत्तेः।

किञ्च न रजतस्य देशान्तरस्थत्वे मानमस्ति। न भ्रान्तिः, तस्याः पुरोवर्तिमात्रविषयत्वात्। ननु देशान्तरस्थत्वं विना न भ्रमस्सम्भवति। स हि यद्यपि पूर्वानुभवमात्रजन्यो लाघवान्न तु प्रमाजन्यः। तथापि शुक्तौ पूर्वं रजताननुभवा-

द्देशान्तरस्थत्वसिद्धिः। मैवम्; रङ्गे रजतारोपादपि शुक्तौ तदारोपदर्शनात् न भ्रान्तिहेतवनुभवाद्देशान्तस्थत्वसिद्धिः। पराक्रान्तश्चात्र **नृसिंहाश्रमैरस्मत्पितृभिश्च**। तस्मान्न ज्ञानलक्षणायां प्रमाणमस्ति। कथं तर्हि सिद्धान्तेऽन्यथाख्यातिसिद्धिरिति चेत्—अत्रास्मत्पितृचरणा आहुः-न विशिष्टज्ञाने विशेषणांशेऽप्यनुभवत्वमिति द्व्याकारकमेकमेव ज्ञानमिदं रजतमिति। यथा प्रत्यभिज्ञायां तत्तांशे स्मृतिः, स्मृतित्वानुभवत्वयोः भ्रमत्वप्रमात्ववदेकवृत्तित्वेऽप्यविरोधात्। जातिसङ्करश्चोपाधिसङ्करत्ववन्न दोषः। ननु कविकाव्यमूलभूतविशिष्टवाक्यार्थज्ञानादौ विशेषणीभूतपदार्थांशे अन्यासम्भवात् स्मृतिरेव प्रत्यासत्तिरिति चेत्-- न; तत्राप्यंशे स्मृतित्वानुभवत्वसम्भवात्। संसर्गस्य च संसर्गमर्यादया प्रतीतेर्न प्रत्यासत्त्यपेक्षा। अन्यथा वाक्यार्थस्यापि ज्ञानलक्षणयैव प्रतीतेः शब्दोच्छेदापत्तेः। अनुव्यवसायो नास्त्येव। ज्ञानस्य स्वप्रकाशत्वादिति केचित्। अन्ये तु घटांशे स्मृतिः ज्ञानांशे चानुभव इति द्व्याकारकत्वमाहुः। तस्माज्ज्ञानलक्षणाभावेऽप्यन्यथाख्यातिर्वार्तिकोक्ता युक्तैवेति संक्षेपः। विशेषो **मत्कृतदीपिकायां खपुष्पवादे** ज्ञेयः॥

इति कमलाकरभट्टकृतावन्यथाख्यातिवादः

## गुणवादः

समाप्ता बुद्धिः। प्रीतिः सुखम्। तदेव निरुपधीच्छाविषयत्वात्पुरुषार्थः। तदर्था हि सर्वस्य प्रवृत्तिः। तच्च वैषयिकमनित्यम। मुक्तौ नित्यम्। अन्ये तु शुक्लादि [ ( ? ) पुंस्त्वादि ] वत्तस्यैवाभिव्यक्तिः। सैव यागादिजन्येत्याहुः। न च दुःखेऽपि नित्यतापत्तिः, तस्यानात्मत्वेनाध्यस्तत्वात्। पीडा दुःखम्। तच्चानिष्टमेव। तस्माद्धि सर्वो निवर्तते। इच्छा इच्छामीति प्रत्ययवेद्या, ज्ञानजन्या। प्रयत्नः पाकेऽहं प्रयते इत्यादिप्रत्ययवेद्यः। इष्टहेतुताधीजन्यः, स च करोतिवेद्यस्सकर्मकः। स एव भावना क्रियेति चोच्यते। सा चोक्ता। धर्माधर्मौ विहितनिषिद्धक्रियाजन्यादृष्टे सुखदुःखहेतू। कार्यैक्यकारणैक्यव्यवस्थाभावान्नादृष्टत्वं जातिः। तौ तत्वकमलाकरे द्वितीयेऽध्याये वक्ष्येते। संस्कारस्त्रिधा--वेगो भावना स्थितिस्थापकश्चेति। आद्यः कर्महेतुः। द्वितीयस्स्मृतिहेतुः। अन्त्यः कटादेस्तादवस्थ्यहेतुः।

इति कमलाकरभट्टकृतौ गुणपदार्थः

## कर्मपदार्थः

अथ कर्म। चलनात्मकं कर्म, चलतीति प्रत्ययहेतुः। तद् उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चेति तार्किकाः। तन्न; भ्रमण-रेचन-स्यन्दनोर्ध्वज्वलन-तिर्यग्गमनादीनामपि विधान्तरापत्तेः। अथ ते गमनभेदाः, तदा पूर्वेष्वपि तथाऽस्तु। संयोगजनकतावच्छेदकत्वेनैकजात्योपपत्तौ तन्नानात्वे मानाभावाच्च। तच्च व्याप्यवृत्त्येवेति केचित्। तन्न; एकदेशे पटवृक्षादिचलनप्रतीतेः। न चावयवकर्मैवेदम्, पटत्वाधिकरणे प्रतीतेः। अन्यथा वृक्षकपिसंयोगेऽप्यवयवसंयोगापत्तेः। तेनाव्याप्यवृत्ति व्याप्यवृत्ति च कर्म। तत् त्रिक्षणावस्थायीति केचित्। तन्न;

आप्रहरं चलतीति प्रतीतेर्लाघवाच्च क्रोशावच्छिन्नगमनव्यक्तेरेकत्वात् । कथमेकेन कर्मणा नानादेशसंयोगविभागोत्पत्तिः ? नैवम्; बाधकाभावात् परमते समत्वाच्च । तिलमात्रचलने हस्तमात्रबाणेऽङ्गुल्यादौ वा नानासंयोगोत्पत्तेः । अथ हस्तावच्छिन्न एकस्संयोगः, तदा क्रोशमात्रेऽपि तथास्तु । तच्च पूर्वदेशसंयोगनाशोत्तरदेशसंयोगहेतुः । तच्चानित्यमेवेत्यन्ये । वार्तिके तु नित्यमुक्तम् । 'प्रत्यक्षद्रव्यवर्तिन्यो दृश्यन्ते याः पुनः क्रियाः । तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञये'ति । तत्त्वन्तु शरादिकर्मणि कस्यापि प्रत्यभिज्ञाभावाद्भेद एव, अनित्यत्वाच्च । दर्शादिकर्मणां त्वैक्यमेव । न हि चैत्रकर्तृकाद्दर्शयागान्मैत्रकर्तृकोऽन्यः, प्रत्यभिज्ञानात् । जातौ गौरवादभिव्यक्तेर्विषयत्वात्फलहेतुत्वादभ्यासाधिकरणाच्चेति वय प्रतीमः । अत एव राणकेनेदं वार्तिकं परमतत्वेन व्यख्यातम् ॥

इति कर्म

**शक्तिः**

शक्तिस्त्रिविधा—सहजाधेया पदशक्तिश्चेति । सा च पूर्वमुक्ता ॥

**सामान्यम्**

सामान्यमनुगतप्रत्ययहेतुः । तत् त्रिविधम् परमपरं परापरञ्चेति । आद्यं सत्ता, द्वितीयं घटत्वादि, अन्त्यं द्रव्यत्वादि अपोहनिरासेन साधितं वार्तिके । न च जातौ जातिः, अनवस्थापत्ते, । न च सर्वेषु एकजात्या न सेति वाच्यम्, तत्र घटत्वादौ चापरकल्पनापत्तेः । सङ्करस्तूपाधिसङ्करवन्न दोषः ।

एवं विदितपदार्थतत्त्वो नित्यानित्यवस्तुविवेकशमदमादिवैराग्यभक्ति सम्पन्नो नित्यकर्माचरन् 'यो वै भूमा तत्सुखम्' इत्यादिश्रुतिस्मृतिभ्यो मोक्षस्य पुरुषार्थत्वमाकलय्य योगाभ्यासेन दहरादिसगुणब्रह्मोपसनयाऽध्यक्षीकृतब्रह्मतत्त्वः परब्रह्मणि लीयते । तदुक्तम्—

वशीकृतमनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवत्साक्षात् अपेतोपाधिकल्पनम् ॥ इति ।
यस्स्यान्मीमांसकं मन्यः[सोऽनधीत्य]कुतूहलम्]।
विद्वज्जनसभामध्ये मूकः कर्ता किमुत्तरम् ॥

विज्ञेषु विज्ञापनमेतदेव मूर्खोत्थनिन्दापि विभूषणं मे ।
ग्रन्थान्,समालोडच विभाव्य दूरं स्तुवन्तु निन्दन्तु हृदाऽथवा माम् ॥

इति श्री जगद्गुरुरामेश्वरभट्टसूनुनारायणभट्टसुत
रामकृष्णभट्टात्मजकमलाकरभट्टकृते
मीमांसाकुतूहले शब्दतत्वं नाम
द्वितोयः परिच्छेदः

शुभमस्तु

समाप्तो ग्रन्थः

